KALIDASA'S

# ABHIJNANA SAKUNTALAM

## ACT IV

(FOR THE USE OF INTERMEDIATE STUDENTS)

EDITED

With Sanskrit Commentary, English and Hindi Translations, Grammatical and Explanatory Notes and Various Readings

BY

R. BHATTA, B.A., LL.B.

Translator of Kadambari, Shishupalvadha Naishadha-Charita, Amaru-Shatak, Etc.

ALLAHABAD

RAM NARAIN LAL

PUBLISHER AND BOOKSELLER

1927

# KALIDASA'S

# ABHIJNANA SAKUNTALAM

## ACT IV

**( FOR THE USE OF INTERMEDIATE STUDENTS )**

**EDITED**

**With Sanskrit Commentary, English and Hindi Translations, Grammatical and Explanatory Notes and Various Readings**

BY

R. BHATTA, B.A., LL.B.

Translator of Kadambari. Shishupalvadha Naishadha-Charita, Amaru-Shatak, Etc.



ALLAHABAD

RAM NARAIN LAL

PUBLISHER AND BOOKSELLER

1927

# उपोद्घातः

अथतावत्कविकुलकुशेशयोद्बोधनविकर्तनेन कालिदासेन ग्रथितमभिज्ञानशकुन्तलं निर्विशेषस्य नाट्यसाहित्यस्य मूर्ध्नि तिष्ठति । तस्य चतुर्थोऽङ्कस्तु प्रयागविश्वविद्यालय-सम्बन्धिमध्यमकक्षायाः पाठ्यपुस्तकेष्वन्तर्गणितः । समग्रान्नाटकात्पृथक्कृता विपरिणामादि युता स्वल्पमूल्यक्रय्या च तस्यावृत्तिर्न विपणौ लभ्येत्याकलय्य संस्कृतमभ्यसितुमीहमानानामधीयानानामुपयोगाय तां सम्पादयितुं कृता मया लेखनी हस्तसन्निहिता ।

## कालिदासः

कविचूडामणिः कालिदासः कस्मिन् शतके उद्भूय महीं कृतार्थां चकारेति नियतं न ज्ञायते । अस्मिन् विषये विद्वद्वर वामन-शिवराम-आपटे कृतः प्रवंधः प्रतीयते विश्वास्यः । अतः स उद्ध्रियते ।

"कालिदास The celebrated author of the अभिज्ञानशकुन्तल, विक्रमोर्वशीय, मालविकाग्निमित्र, रघुवंश. कुमारसंभव, मेघदूत, ऋतुसंहार; also of the poems नलोदय and of some other minor works. The earliest known authentic reference to Kalidasa is in an inscription dated 556 Sake or 634 A. D., in which he and Bharavi are spoken of as being renowned poets. The verse is as follows :—

येनायोजि न वेश्म
स्थिरमर्थविधौ विवेकिना जिनवेश्म ।

स विजयतां रविकीर्तिः
कविताश्रितकालिदासभारविकीर्तिः ॥

Bana's reference to him in the beginning of his Harsha-Charita also shows that he must have flourished before the time of Bana, *i. e.*, before the first half of the seventh century. But how long before the seventh century the poet flourished is not yet known. According to Mallinatha's explanation on Me. 14, निचुल and दिङ्नाग were contemporaries of Kalidasa. If Mallinatha's suggestion be correct—and it is very doubtful if it be really so—then our poet must have lived in the middle of the sixth century which is the date usually assigned to दिङ्नाग.

There is one point which, if definitely settled, would give the poet's precise date. It is the mention by Kalidasa of his patron Vikrama. Who this Vikrama is, it has not yet been definitely settled. Popular tradition identifies him with the founder of the Samvat era which is said to have commenced 56 B. C. If this view be correct, Kalidasa must be considered as belonging to the first century before Christ. But some scholars have recently come to the conclusion that what is called the era of Vikramaditya 56 B. C. was a date arrived at by taking the date of the great battle of Karur in

which Vikrama finally defeated the Mlechchhas, *i. e.*, 544 A. D. and then by throwing back the beginning of the new era 600 years before that date, *i. e.*, 56 B. C. If this conclusion be accepted as correct—and scholars do not seem to have yet agreed on the point—Kalidasa must have flourished in the sixth century A. D. The question is still an open one."*

---

* The Practical Sanskrit-English Dictionary by the late Vaman Shivram Apte, M. A.; Appendix II.

# अभिज्ञानशकुन्तलस्य

## वस्तुनिर्देशः

( १ )

अथ कदाचिन्मृगानुसारी दुष्यन्तः कण्वाश्रमं प्रापत्। तत्र स कण्वं न ददर्श। प्रियम्वदानसूयाभ्यां सह वृक्षसेचने लग्ना शकुन्तला तस्य दृष्टिपथं गता। तां दृष्ट्वा राजा परं व्यस्मयत। ततः स कन्यकानां पुरो जगाम। ताश्च तस्य सत्कारं चक्रुः। कथाप्रसङ्गात्तेन शकुन्तलाया उत्पत्तिः श्रुता। तदा स मदनबाण-विद्धोऽभूत्। शकुन्तलायै स्वमङ्गुलीयकं च दत्तवान्। अत्रान्तरे कश्चिद्वन्यः करी कण्वाश्रमं समागतः। तं नियन्तुमियाय भूपालः।

( २ )

प्रभाते विदूषको राजानमुपाजगाम। राजा तु विप्रकृष्टे प्रदेशे सैनिकानां निवेशनाय सेनापतिमाज्ञापयामास। तदा स विदूषक सन्निधौ शकुन्तलां प्रशशंस। तत्रैव वस्तुमियेष च। विदूषकं वन-वासार्थमपदेशं पप्रच्छ। तदैव रक्षोभिराकुलीकृतास्तपस्विनो राजानं तत्र स्थातुं प्रार्थयामासुः। मात्रा च समाहूतः स विदूषकं तेन सह सर्वाननुयायिनश्च नगरं प्रैषयत्। स्वयं च तत्रोवास।

( ३ )

कामसन्तप्ता शकुन्तला तद्वियोगेन भृशं दुःखिताभवत्। सख्यौ च तद्व्यथापनोदार्थं यथाशक्त्युपचारं चक्रतुः। राजापि ता-मन्विष्यन्मालिनीतीरमाजगाम। तत्र पत्रं लिखितुं व्यवसितां प्रियां च ददर्श। तस्मिन्नेव क्षणे भूपस्तदन्तिकमुपासर्पत्। तां गान्धर्व विधिना चावाह। शकुन्तला दुष्यन्ताद्गर्भं दधाविति निशम्य कण्वस्य

भगिनी गौतमी तां द्रष्टुमागता। तां निरीक्ष्य राजाऽऽश्रमपाद-पेष्वात्मानमगूहत। शकुन्तला च बहिर्जगाम। तत्समागमोत्सुको राजा नितान्तं विषण्णो जातः। परिणते दिवसे तापसैराहूतः स पुनरप्यग्निहोत्रादीनां रक्षणार्थं निश्चक्राम।

( ४ )

भूपाले राजधानीं परावृत्ते शकुन्तला स्फुटगर्भाभवत्। कण्वश्चोटजमाजगाम। उद्वाहसम्बन्धिनं वृत्तान्तं ज्ञात्वा स किं करिष्यतीति सखीभ्यां चिन्तितम्। एकदा तत्र दुर्वासाः समागतवान्। तं पतिगतहृदया शकुन्तला न दध्यौ। स चापमानात्कुपितो—यत्कृते शून्यहृदया त्वं मां तिरस्करोषि स त्वां न स्मरिष्यति—इति शापं ददौ। शापमाकर्ण्य सखी कथमपि मुनिं सानुक्रोशं कृत्वा शापमोक्षार्थं प्रार्थयामास। अभिज्ञानाभरणे दर्शिते राजा शकुन्तलां स्मरिष्यतीत्युक्त्वान्तर्हितो मुनिः। ततोऽशरीरिणी वाक् सर्वं वृत्तान्तमुद्वाहस्य काश्यपाय न्यवेदयत्। तेन स परं तोषं प्रापत्। आहूय च शिष्यान् शकुन्तलां दुष्यन्तस्य राजधानीं नेतुमादिदेश। आश्रमवृक्षास्तस्यै वाससी भूषणानि च ददुः। सा मुनिभिर्गोपिता प्रतस्थे। कण्वश्च तस्यै वरं ददौ। यदि स राजा प्रत्यभिज्ञानमन्थरो भवेत्तदा तस्मै दर्शयेत्युक्त्वा सख्यौ तस्याङ्गुलीयकं ददतुः।

( ५ )

अथ शापप्रभावाद्राजा शकुन्तलां विसस्मार। तां पुरस्कृत्य मुनयश्च समाजग्मुः। ते गुरोः संदेशं जगदुः—त्वया शकुन्तला गान्धर्वविधिना पत्नीत्वेन स्वीकृतेति विज्ञाय मया सा तवान्तिकं प्रेषितास्ति। भवांश्च तां ग्रहीतुमर्हति। तच्छ्रुत्वा राजा चिन्ताकुलो बभूव। न च तया सहोद्वाहस्तस्य स्मृतिमापन्नः। एवं गते शकुन्तला विललाप। मुनयश्च तं भर्त्सयाञ्चक्रिरे। ततः शकुन्तलाङ्गुलीयकं दर्शयितुं व्यवसिता तद्धस्ते नाप। तत्तु पूर्वमेव तीर्थे पपात। राजन्,

इयं तव भार्या; एनां त्यज गृहाण वा—इति मुनयो राजानं प्राहुः। अनया सह विवाहं न स्मराम्यतः कथं मया सा स्वीक्रियेत—इति राजा तान्प्रत्युवाच। तदा गुरोरनुज्ञया यावत्सा तस्य भवनं गच्छति तावत्काचिदप्सरास्तां गृहीत्वा दिवं जगाम। इमं वृत्तान्तं निशम्य राजा परं दुःखमापेदे।

( ६ )

अत्रान्तरे केनचिद्धीवरेण महामत्स्यः समासादितस्तस्योदरादङ्गुलीयकं च लब्धम्। तद्विक्रेतुं स विपणिमाजगाम। राजनामाङ्कितं दृष्ट्वा राजपुरुषास्तदादाय राजान्तिकमीयुः। अङ्गुलीयकमवलोक्यैव शकुन्तला राज्ञः स्मृतिपथं याता। ततः स विनोदाय प्रमदोद्यानं प्राप। विदूषकेण सह माधवीमण्डपे स्थित्वा प्रियायाश्चित्रस्यानयनार्थमाज्ञां ददौ। ततो मेनकया प्रेषिता सानुमती भूभृत्प्रकृतिनिरीक्षणार्थं तत्राययौ। राजा च विदूषकं पप्रच्छ—शकुन्तला गान्धर्वविधिना मया परिणीतेति पूर्वमहं त्वामवोचम्। यदा सा ममान्तिकं समागता तदा कथं त्वं मां न स्मारितवान्। उक्तं विदूषकेण—अहन्तु भवत्कथनं परिहासमिव मत्वा तूष्णीमासम्। तदा भृशमुद्विग्नो राजा सचिवे राज्यभारं निधाय पपात चिन्ताब्धौ। तदा चेटी चित्रमादायोपाययौ। तद्दृष्ट्वा शोकविह्वलो भूपः पुनश्चित्रमालिखितुं चेटीं वर्तिकादिसम्पुटमानेतुं प्रेषयामास। ततः स चित्रविनोदेन कालं निनाय स्थिरतां तु न प्राप। अयं वृत्तान्तश्चान्तःपुरे प्रकटीभूत इति ज्ञात्वा देव्या भीतो विदूषको दध्यौ। अस्मिन्नेव क्षणे धनिकमेकं पुत्रहीनं मृतं श्रुत्वा स्वानपत्यतया राजा परां व्यथामापेदे। तदैव मघवा कालनेमिसुताञ्जेतुं दुष्यन्तमानेतुं मातलिं प्रेषयामास। स च राक्षसं हन्तुं दिवं ययौ।

( ७ )

विडौजसः कार्यं संपाद्य दुष्यन्तः सारथिना सह भूमिमागन्तुं प्रतस्थे। मार्गेऽद्भुतं शैलं विलोक्य स मातलिं तस्य नाम पप्रच्छ। अत्र मारीचस्तपस्यतीति मातलिनोक्तम्। ततस्तस्य दिदृक्षया स वृक्षमूले निषसाद। मातलिश्च राज्ञ आगमनं महर्षये निवेदयितुं गतः। तस्मिन्नेव क्षणे राजा क्रीडालग्नं शिशुमेकमायान्तं ददर्श— बालः क्रीडितुं सिंहपोतकं चकर्ष। तं दृष्ट्वा नृपचित्तं स्नेहाकुलमभूत्। ततस्तापसीवचसा पशुं दूरीकृत्य स सुतस्पर्शसुखं लेभे। तस्य नाम तन्मातुश्च नामाकर्ण्य स परं व्यस्मयत। ततः सर्वं वृत्तान्तं विज्ञाय स तपस्विनीं शकुन्तलां स्वापराधमर्षणाय प्रार्थयामास। सा चैवंविधेनाकस्मिकेन संयोगेन समाहृष्टा तेन सह मारीचं ददर्श ततो विस्मृतिकारणं ज्ञात्वा राजाऽऽत्मानं वचनीयान्मुक्तं मेने। मारीचश्च कण्वाय सर्वं वृत्तान्तं संदिदेश।

## अभिज्ञानशकुन्तलस्य मूलकथा

अभिज्ञानशकुन्तलस्य वस्तु न कालिदासस्य कल्पनाप्रसूतम्। तेन शकुन्तलोपाख्यानस्य कथा परिष्कृत्य नाटके ऽभिनिवेशिता। अतः नाटकवस्तुनो विच्छिन्नादंशादन्यत्र तस्योद्धारः क्रियते।

## शकुन्तलोपाख्यानम्

वैशंपायन उवाच—

स कदाचिन्महाबाहुः प्रभूतबलवाहनः
वनं जगाम गहनं हयनागशतैर्वृतः।
तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः
लोडयामास दुष्यन्तः सूदयन्विविधान्मृगान्।
ततोमृगसहस्राणि हत्वा सबलवाहनः

राजा मृगप्रसंगेन वनमन्यद्विवेश ह।
एवं गुणसमायुक्तं ददर्श स वनं नृपः
आश्रमप्रवरं रम्यं ददर्श च मनोरमम्।
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा
महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम्।
सामात्यो राजलिंगानि सोऽपनीय नराधिपः
पुरोहितसहायश्च जगामाश्रममुत्तमम्।
सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तदाश्रमम्
उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव।
श्रुत्वाथ तस्य तं शब्दं कन्या श्रीरिवरूपिणी
निश्चक्रामाश्रमात्तस्मात्तापसीवेषधारिणी।
उवाच स्मयमानेव किं कार्यं क्रियतामिति
तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम्।
आगतोहं महाभागमृषिं कण्वमुपासितुम्
क गतो भगवान् भद्रे तन्ममाचक्ष्व शोभने।

शकुन्तलोवाच—

गतः पिता मे भगवान् फलान्याहर्तुमाश्रमात्
मुहूर्तं संप्रतीक्षस्व द्रष्टास्येनमुपागतम्।

वैशंपायन उवाच—

अपश्यमानस्तमृषिं तथा चोक्तस्तया च सः
तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम्।
रूपयौवनसम्पन्नामित्युवाच महीपतिः
का त्वं कस्यासि सुश्रोणि किमर्थं चागता वनम्।
इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने
एवमुक्ता तु सा कन्या तेन राज्ञा तमाश्रमे।

उवाच हसती वाक्यमिदं सुमधुराक्षरम्
कण्वस्याहं भगवतो दुष्यन्त दुहिता मता।

दुष्यन्त उवाच—

ऊर्ध्वरेता महाभागे भगवाँल्लोकपूजितः
कथं त्वं तस्य दुहिता संभूता वरवर्णिनी।

शकुन्तलोवाच—

तप्यमानः किल पुरा विश्वामित्रो महत्तपः
सुभृशं तापयामास शक्रं सुरगणेश्वरम्।
भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत्
लोभयित्वा वरारोहे तपसस्तं निवर्तय।

मेनकोवाच—

यथाऽसौ न दहेत्क्रुद्धस्तथाऽऽज्ञापय मां विभो

कण्व उवाच—

प्रातिष्ठत तदा काले मेनका वायुना सह
अथापश्यद्वरारोहा तपसा दग्धकिल्विषम्।
विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे
अभिवाद्य ततः सा तं प्राक्रीडदृषिसन्निधौ।
तस्या रूपगुणान् दृष्ट्वा स तु विप्रर्षभस्तदा
न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता।
तौ तत्र स्म चिरं कालमुभौ व्याहरतां तदा
जनयामास स मुनिर्मेनकायां शकुन्तलाम्।
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम्।
पर्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम्
उपस्प्रष्टुं गतश्चैनां दुहितृत्वे न्यवेशयम्।

शकुन्तलोवाच—

सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप

दुष्यन्त उवाच—

सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते।

शकुन्तलोवाच—

सत्यं मे प्रतिजानीहि यथा वक्ष्यास्यहं रहः।
मयि जायेत यः पुत्रः स भवेत्त्वदनन्तरः।
यद्येतदेव दुष्यन्त अस्तु मे सङ्गमस्त्वया।

वैशंपायन उवाच—

एवमस्त्विति तां राजा प्रत्युवाचाविचारयन्
अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते।
एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीं
जग्राह विधिवत्पाणावुवास च तया सह।
विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम्।
तया त्वानाययिष्यामि निवासं स्वं शुचिस्मिते
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय।
मनसा चिन्तयन्प्रायात्काश्यपं प्रति पार्थिवः
भगवांस्तपसायुक्तः श्रुत्वा किं नु करिष्यति।
मुहूर्तयाते तस्मिंस्तु कण्वोप्याश्रममागमत्
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः।
उवाच भगवान्प्रीतः पश्यन्दिव्येन चक्षुषा
त्वयाद्य भद्रे रहसि मामनादृत्य यः कृतः।
पुंसा सह समायोगो न स धर्मोपघातकः

प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि।
गृहाण च वरं मत्तस्त्वं शुभे यदभीप्सितम्
ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा।
शकुन्तला पौरवाणां दुष्यन्तहितकाम्यया
त्रिषु वर्षेषु पूर्णेषु दीष्यन्ति जनमेजय।
जातकर्मादिसंस्कारं कण्वः पुण्यकृतां वरः
विधिवत्कारयामास वर्धमानस्य धीमतः।
अस्त्वयं सर्वदमनः सर्वं हि दमयत्यसौ
तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम्।
समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम्
तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह।
शकुन्तलामिमां शीघ्रं सहपुत्रामितो गृहात्
भर्तुः प्रापयतागारं सर्वलक्षणपूजिताम्।
तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्त महौजसः
शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम्।
अभिसृत्य च राजानं विदिता च प्रवेशिता
पूजयित्वा यथान्यायमब्रवीच्च शकुन्तला।
अयं पुत्रस्त्वया राजन्यौवराज्येऽभिषिच्यताम्
सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि।
अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि
सैवमुक्त वरारोहा व्रीडितेव तपस्विनी।
कटाक्षैर्निर्दहन्तीव तिर्यग्राजानमैक्षत
सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता।
भर्तारमभिसंप्रेक्ष्य क्रुद्धा वचनमब्रवीत्
जानन्नपि महाराज कस्मादेवं प्रभाषसे।
न जानामीति निःशंकं यथान्यः प्राकृतो जनः।

दुष्यन्त उवाच—

न पुत्रमभिजानामि त्वयि जातं शकुन्तले
असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः।

शकुन्तलोवाच—

राजन् सत्यं परं ब्रह्म सत्यं च समयः परः
मात्याक्षीः समयं राजन् सत्यं संगतमस्तु ते।

वैशंपायन उवाच—

एतावदुक्त्वा राजानं प्रातिष्ठत शकुन्तला
अथान्तरिक्षाद् दुष्यन्तं वागुवाचाशरीरिणी।
भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम्
तच्छ्रुत्वा पौरवो राजा व्याहृतं त्रिदिवौकसाम्।
पुरोहितममात्यांश्च स प्रहृष्टोऽब्रवीदिदम्
शृण्वन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितम्।
यद्यहं वचनादेव गृह्णीयामि स्वमात्मजम्
भवेद्धि शंक्यो लोकस्य नैव शुद्धो भवेदयम्।
तं विशोध्य तदा राजा देवदूतेन भारत
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम्।
तां चैव भार्यां दुष्यन्तः पूजयामास धर्मतः
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः।
कृतो लोकपरोक्षोऽयं सबंधोऽय त्वया सह
तस्मादेतन्मया देवि त्वच्छुध्यर्थं विचारितम्।
यच्च कोपितया त्यर्थं त्वयोक्तोस्म्यप्रियं प्रिये
प्रणयिन्या विशालाक्षि तत्क्षान्तं ते मया शुभे
दुष्यन्तस्तु तदा राजा पुत्रं शाकुन्तलं तदा
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत्

( १—६१-७४ )

## अनयोर्भेदः

अत्र द्वयोः प्रकरणयोः कश्चिन भेद उपक्रान्तः। शकुन्तलोपाख्याने तु राजा शकुन्तलाया विस्मरणं व्यपदिदेश सा च प्रतिनिवृत्ता। नाटके तु दुर्वाससः शापो विस्मरणस्य कारणीभूतः कृतः शकुन्तला च मारीचाश्रमं प्रापिता। अनयोर्भेदयोरन्तःप्रवेशनेन कथा पूर्वापेक्षया रमणीया चेतोहरा च संवृत्ता। दुष्यन्तस्य चरित्राल्लाञ्छनं दूरीभूतम्; शकुन्तला च मारीचाश्रमे स्वदशानुरूपं स्थानं प्राप।

## नाटकपात्राणि

### दुष्यन्तः

अभिज्ञानशकुन्तलस्य नायको दुष्यन्तो नाम महाप्रतापो राजा धर्मे मनः समाधाय पृथिवीं शशास। तापसान् गुरूंश्च प्रीणयितुमुत्सुकः स राजोचितविनोदव्यसनितयापि मर्यादां नातिचक्राम। मृगयाशीलेन विप्रकृष्टान्तरं गतेन मृगं हन्तुं च प्रवृत्तेन तेन—आश्रम मृगोऽयं न हन्तव्यो न हन्तव्य—इत्युक्तिं श्रुत्वा मृगवधात्पराङ्मुखीभूय तापसांश्चावलोक्य रथस्य स्थापनाय सारथिः समादिष्टः। कण्वाश्रमपदं सन्निहितं ज्ञात्वा कण्वे सोमतीर्थंगतेप्याश्रमदर्शनेनैवात्मानं पवित्रीकर्तुं तेन तत्र गतम्। तपोवनवासिनामुपरोधो मा भूदितिविचार्य तेन रथं दूरत एव त्यक्तम्। विनीतवेशप्रवेश्यानि तपोवनानीति मत्वा तेन सूतहस्ते धनुराभरणानि च निक्षिप्तानि। विदूषकेण राजग्राह्यांशग्रहणापदेशादाश्रमं गन्तुमुपदिष्टेन तेन आरण्यका नः तपः षड्भागं ददतीत्युक्त्वा तन्मतमधिक्षिप्तम्। तापसा राक्षसानामपसारणाय तमाश्रममाजुहुवुः। माता च समकालमेव चतुर्थीव्रतस्यान्ते नगरमाजुहुवे। तदा स किमत्र प्रतिविधेयमिति नितान्तमाकुलीकृतः। आश्रमवासिनामाज्ञां

च प्रतिजग्राह। कण्वशिष्याः समागता इति निवेदिते स उपाध्यायं तेषां श्रौतेन विधिना पुरस्कारार्थं स्वयमेव तान् प्रवेशयितुं चाचकाङ्क्ष। स्वयं च कार्यभाराक्रान्तोऽपि सपदि तेषां स्वागतार्थमग्निशालामियाय। इन्द्रलोकात्प्रतिनिवृत्तस्य तस्य पथि मारीचाश्रमोऽभिपेदे। तत्र मारीचं प्रदक्षिणीकृत्य गन्तुमनाः स आश्रमस्य दिशमपि प्रणनाम। सूतं च मारीचस्य दर्शनार्थमवसरं निश्चेतुं प्रेषयामास। स्वसुखनिरभिलाषः स लोकहेतो रात्रिन्दिवं चिखिदे। कण्वस्य सन्देशहारिणामागमनं निशम्य तस्य मनः कारणं ज्ञातुं नितान्तमाकुलमभूत्।

दुष्यन्तो धर्ममार्गानुगामी, कीर्त्तिमदूषितां रक्षितुं सयत्नो जितेन्द्रियश्चासीत्। शकुन्तलादर्शनेन कामवाणविद्धः स कथमियं ब्राह्मणकन्यका क्षत्रियकन्यकावेति चिन्तयामास। तस्य मनस्तस्यामभिलाषि जातमतः सा क्षत्रियकन्यैवेति तेन निश्चितम्। यद्यपि तत्वान्वेषाद् हतमात्मानं मेने तथापि स क्षुण्णाद्वर्त्मनो रेखामात्रमपि न व्यतीयाय। तापसकन्यकाभ्यः किमपि मिथ्या न जगाद। को भवानिति पृष्टोऽस्पष्टमुत्तरं ददौ। शकुन्तलां विश्वामित्रस्य कन्यकां ज्ञात्वापि यावत्तेन तस्याः पितुः सङ्कल्पो न श्रुतस्तावत्तया सह विवाहे मतिं कृत्वा स्वप्रेम न प्रकटीकृतम्। कण्वशिष्यैः सह समागतां शकुन्तलां विलोक्य स परं व्यस्मयत। प्रतीहारिणा तत्सौन्दर्यप्रशंसायां कृतायामनिर्वर्णनीयं परकलत्रमित्युक्त्वा तं निषेधयामास। तस्या अप्रतिमरूपसम्पत्या सुतरामाकृष्टोऽपि तां न जग्राह। दुर्वाससः शापप्रभावात्तेन तत्सम्बन्धि सर्वं विस्मृतम्। किं चात्रभवती मया परिणीतपूर्वेति तां पप्रच्छ। शकुन्तलया तस्य स्मृतिं नवीकर्तुमवगुण्ठने दूरीकृते तां दृष्ट्वा तस्य मनो विकल्पदोलामधिरुरोह। तापसैस्तया च विश्वासे समुत्पादितेऽपि शकुन्तलाया अस्वीकारस्तस्य चरित्रदार्ढ्यं प्रमाणीकरोति।

अहो तस्य धर्मविज्ञिता ! ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा को विचारयति । कोपाभिभूतया शकुन्तलया पुरुवंशप्रत्ययेन मुग्धीकृता-हमित्युक्ते स भृशं विषसाद । कोपश्च तस्या अकृत्रिम इति तेनाज्ञायि तथापि शापप्रभावाद्धर्मविज्ञितत्वाच्च सा तेन परित्यक्ता । तापसास्तु तां पुनराश्रमं नेतुं न शेकुः । सा न मया चिन्तनीयेति राजा तान्प्रत्युवाच । बभूव च किङ्कर्तव्यविमूढः । आहोस्विदहं तां विस्मृतवान् सा वा वितथां वाचं वक्तीति निश्चेतुं न शशाक गुरू-पदेशं चानुससार । मारीचाश्रमपर्यन्तभूमिषु क्रीडन्तं भरतं दृष्ट्वा तम-ज्ञात्वापि स परं विस्मयमापेदे तस्मिन् स्पृहा चाजनि । भृत्यान् तस्य मातुर्नाम प्रष्टुमियेष किन्तु न न्याय्यः परदारव्यवहार इति विचार्य तन्न पृष्टम् । मारीचस्तं पत्न्याः पुत्रस्य च संयोगे दिष्ट्या वर्धनमुच्चचार । राजा च निमित्तनैमित्तिकयोः क्रमे विपर्ययं ददर्शेत्युवाच । मारीचस्याशिषः फलं स आशीर्दानात् पूर्वमेव बुभुजे । मारीचस्य सकाशात् शकुन्तलाया विस्मरणे कारणीभूतां दुर्वाससः शापस्य कथां निशम्य स परं तोषं प्राप्यात्मानं वचनीया-न्मुक्तं मेने ।

स्त्रीणां प्रतिपत्तिस्तस्य हृदये निहिताऽऽसीत् । सखीभ्यामुक्ता-मपि शकुन्तलां द्वौ वृत्तौ सेवितुं स नानुमेने स्वयं च सेचनाय तत्परो बभूव । स वाजिन आर्द्रपृष्ठाः कर्तुं सारथिमादिष्टवानिति मनुष्येतरेषु भूतेष्वपि तस्य सहानुभूतिरनुमीयते । मृते श्रेष्ठिनि गर्भः पित्र्यं रिक्थ मर्हतीत्युक्त्या प्रजासु च तस्य सहानुभूतिरवगम्यते ।

## शकुन्तला

शकुन्तला सर्वथा मुग्धस्वभावा, अपांशुला, अपूर्वसरलता-न्विता चासीत् । लज्जाशीलता, शुद्धता, भीरुत्वं, विनयः, प्रफुल्ल-चित्तत्वं च तस्याः स्वभावस्य विशिष्टानि चिन्हान्यासन् । आश्रमस्य

स्वतंत्रे वायुमण्डले सम्वर्धिता सा चिन्ताभिरनाक्रान्ता संसारस्य मायाजालान्मुक्ता चासीत्। तस्या अव्याजमनोहरं शरीरं वल्कलेनाप्यधिकमनोज्ञमवबभासे। असाधारणरूपसम्पन्नेष्वङ्गेषु कुसुममिवलोभनीयं यौवनं सन्नद्धमासीत्। या मुग्धा प्राकृता च कन्या आदौ प्रकृतेः प्रवृत्तीनामाज्ञानुवर्तिनी, सर्वथा आत्म-विस्मरणशीला च दृष्टा सैवान्ते दुःखं सोढुं समर्था, धीरा, तपोरता, संवरणशीला, धर्मस्य नियोगैर्दृढं नियमिता च जाता।

अवधानहीना अनुभवशून्या च कन्या दुष्यन्तं दृष्ट्वैव तपोवन विरोधिनः कामस्य गमनीया संवृत्ता। अपरिचितकामविकारा सा तस्मिन् क्षणे प्रादुर्भूतस्य मनोविकारस्य उदयाय उद्युक्ता नासीत्। अतः प्रतिरोद्धुमात्मानं गोप्तुं च मनोभावं न शशाक।

दुष्यन्तेन परित्यक्तायास्तस्याश्चित्तं भिया, क्रुधा, आत्म-प्रतिपत्या चाभिभूतम्। असत्यवादिनीत्यधिक्षिप्ता आत्मानं नियन्त्रितुं न शशाक विलपितुं च आरेभे। राज्ञा परित्यक्तां तां शिष्या अपि पुनराश्रमं नेतुं व्यवसिता न बभूवुः। इत्थमुभयतोऽपि निःसहायायास्तस्याः स्थितिः भृशं करुणा बभूव। तस्मिन्नेवक्षणे स्वर्गादापतिता मेनका तां मारीचाश्रमं नेतुम्। तत्र भरतस्य मातृत्वेन वर्तमाना सा जितेन्द्रिया, अनुतापदग्धा, अक्षुब्धा च दृष्टा।

कामसन्तप्तापि राजानं स्पर्शितुं नानुमेने। अहो तस्याः सदाचारपरायणता! तं प्रति प्रणये स्वीकृतेऽपि तेन सह एकाकिनी स्थातुमसमर्था सखीभ्यामन्यतरां तत्र स्थातुं प्रार्थयामास। इति तस्या भीरुत्वम्। दुष्यन्तगतहृदया सा दुर्वाससमुपस्थितं न विभावयामास शप्तमप्यात्मानं न सस्मार। इयं तस्या आदर्शीभूता पतिभक्तिः। कदा आश्रमं पुनर्द्रक्ष्यामि; पितुः शरीरं तपसा कर्शितम्; इत्यादिभिस्तस्याः पितरि तत्सकाशवर्तिनि आश्रमे च स्नेहः प्रकटितः।

आश्रमवर्तिनीषु लतासु तस्याः सोदरस्नेहः प्रस्थानसमये पल्लवत्प्रकटीभूतः । तासां सहवासत्यागः सुदुःसहः । ताः सा सख्योर्हस्ते निक्षेप्तुं न विसस्मार । उटजपर्यन्तचारिषु मृगेष्वपि तस्याः सोदरस्नेहः । एका मृगवधूर्गर्भिणीति प्रस्थानकाले ज्ञात्वा तस्यां अनघप्रसवायां जातायां प्रियोदन्तनिवेदकप्रेषणाय शकुन्तलया निवेदितम् । असिक्तेषु वृक्षेषु सा जलं पातुं न व्यवास । मण्डनार्थमपि तेषां पल्लवं नाददे । तेषामाद्ये पुष्पोद्गमसमये तस्या उत्सवो बभूव । वनवाससहचरेष्वसामान्यस्नेहत्वात् तस्याः पिता सर्वान् गमनानुमतये प्रार्थयामास । यदा सा आश्रमाद्गन्तुमियेष तदा तस्याः पुत्रकृतको मृगः पंथानं न जहौ । सा तं स्थातुं अनुनिन्ये पितुश्च हस्ते तं निचिक्षेप । भर्तृदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्यास्तस्याः पादौ दुःखेन पुरतः प्रववृताते ।

## कण्वः

शकुन्तलायाः पिता कण्वो नितान्तं शान्तः, अक्षुब्धः, स्वकर्तव्ये सोत्साहः, तपोनुष्ठानपरश्चासीत् । स शकुन्तलायाः प्रतिकूलं दैवं शमयितुं सोमतीर्थं गतवान् । तस्य आश्रमं प्रत्यागमनात्प्रागेव शकुन्तला पतिं प्रापेति तस्य सफलीभूता यात्रा । अग्निशालायां गतेन तेन अशरीरिण्या वाचा दुहितुः सर्ववृत्तं ज्ञातम् । स ऋषिभिर्गोपितां तां दुष्यन्तस्य राजधानीं प्रेषयामास । शकुन्तला तेन महता स्नेहेन संवर्द्धिता । तस्याः प्रस्थानवेलायां कण्वस्य दशा नितरां करुणा । तस्य शोकोदयः, शकुन्तलायै उपदेशः, दुष्यन्तार्थं संदेशः, तस्यां प्रेषितायामन्तः करणस्य विशदत्वं चैतानि सर्वोत्कृष्टैः अकृत्रिमभावव्यञ्जकैश्च श्लोकैः प्रकटीकृतानि ।

## प्रियंवदानसूये

प्रियंवदा संभाषणे विदग्धा परिहासशीला च; अनसूया गंभीरा, चिन्ताशीला, कठोरतरप्रज्ञान्विता चासीत्। दुष्यन्तसन्निधौ तयोः शालीनता, शकुन्तलाया निरामयत्वविषयिका चिन्ता, शरीरस्य व्याधेः कारणं वक्तुं शकुन्तलां प्रति निर्बंधपूर्वकोऽनुनयः, निर्जने दुष्यन्तेन सह शकुन्तलायाः समागमाय तयोरौत्सुक्यं, दुर्वासस: शापस्य प्रच्छन्नमाकर्णनम्, शापमपनेतुं च व्यग्रता, प्रस्थान वेलायां शोकः—सर्वमिदं शकुन्तलायां तयोः हृद्यां सहानुभूतिं प्रमाणीकरोति।

## प्रस्तुताऽऽवृत्तिः

इयमावृत्तिरधोलिखितक्रमेण चतुः खण्डात्मिका—

(१) मूलम्। भिन्नभिन्नेषु स्थानेषु प्रकाशितानां पुस्तकानां पाठं तुलनया निर्णीय पाठः संशोधितः संयोजितानि च पाठान्तराणि पादटिप्पणीषु।

(२) आंग्लभाषया विपरिणामनम्। रचनायामस्य *मोनियर विलियम्स—पाटनकरकृताभ्यां विपरिणामाभ्यां साहाय्यं लब्धम्।

(३) हिन्दीभाषयानुवादः। राजा लक्ष्मणसिंहेन कृतमनुवादमवलम्ब्य विपरिणतः।

(४) संस्कृतटीका। आंग्लभाषायां सम्पादितेषु पुस्तकेषु प्रचलितायाः पैराफ्रेसरूपायाष्टीकायाः परिपाटीमनुसृत्य लिखिता। अस्यां सरलतरैः पर्यायशब्दैः कवेराशयः प्रकटीकृतः। व्याकरण-

---

* अनेन चिन्हेनाङ्कितानि पुस्तकानि मया श्री १०८ मद्गुरुवरप्रेरणया-त्यागराकालेजस्य पुस्तकालयादृणीकृतान्यतोऽहं तत्प्रबंधयित्रा श्रीनारायणेन बलवदुपकृतोस्मि।

नुसारिण्योऽर्थव्यञ्जकाश्चटिप्पण्यः संवलिताः । इयं चाधोलिखिता-श्टीका आश्रित्य प्रणीता —

⊛ ( *a* ) गोडबोले-परबमहोदयाभ्यां संस्कृता राघवभट्टकृतार्थ द्योतनिकाटीका ।

⊛ ( *b* ) कृष्णदासकृता टीका ।

( *c* ) ईश्वरचन्द्रविद्यासागरकृता टीका ।

( *d* ) जीवानन्द विद्यासागर कृताटीका ।

पूर्वनिर्दिष्टाभ्यः सत्तावृत्तिभ्यो यत्साहाय्यं न्याय्यं तत्सर्वं समासाद्य तासामुत्तमर्णत्वेन कृतोपयोगत्वादहं तत्तट्टीकासम्पादयितॄणा मधमर्णतां गतोऽस्मीति मन्ये । शब्दानां व्युत्पत्तयश्च वाचस्पत्य प्रभृतीन् प्रामाणिकान् ग्रन्थान् संवाद्य सङ्कलिता इति कृतज्ञता-पूर्वकं स्वीक्रियते ।

उच्चतरासु परीक्षासु नियतानां पुस्तकानां बालशिष्योचितटीका निर्माणं न युक्तम् । ताभिर्न भवति पिपठिषूणामुपलब्धेरुत्तेजनं जायते चाप्राप्यावकाशमुपचयाय विषयग्राहिका शक्तिः कुण्ठितेति विमृश्योत्कर्षमापन्नानामन्तेवासिनामुपयोगायेयमावृत्तिः प्रस्तूयते । अस्याः शोधने भूयान् परिश्रमः स्वीकृतस्तथापि मम तनुवाग्विभवत्वा-द्यत्किञ्चित्स्खलनं सुधीभिः समुद्भाव्येत तत्तैः परिशोधनीयम् । इयं पिपठीर्भिरत्यन्तोपयोगित्वेनाङ्गीकृता भविष्यतीत्याशास्ते ।

आगरा पट्टने
राघे सुदि १२
१८८४

ऋषीश्वरः

## DRAMATIS PERSONÆ.

दुष्यन्तः—King of Hastinapur and the hero of the play.

कण्वः—Shakuntala's foster father.

शार्ङ्गरवशारद्वतौ—Two disciples of Kanva.

शकुन्तला—Daughter of Vishwamitra and heroine of the play.

प्रियंवदा अनसूया च—Companions of Shakuntala.

गौतमी—Shakuntala's foster mother.

———

अथ

# अभिज्ञानशाकुन्तलम्

## चतुर्थोऽङ्कः

( ततः प्रविशतः[a] कुसुमावचयं[b] [1]नाटयन्त्यौ सख्यौ[c] )

अनसूया—पिअंवदे,[2] जइ वि गन्धव्वेण विहिणा[3] णिव्वुत्त कल्लाणा सउन्दला अणुरूवभत्तुगामिणी संवुत्तेति णिव्वुदं मे हिअअं, तह वि एत्तिअं, चिन्तणिज्जं। [प्रियंवदे, यद्यपि गान्धर्वेण[d] विधिना[e] निर्वृत्तकल्याणा[f] शकुन्तलानुरूपभर्तृगामिनी संवृत्तेति निर्वृतं[g] मे हृदयं तथाप्येतावच्चिन्तनीयम् ]

प्रियंवदा—कहं विअ। [ कथमिव ]

अनसूया—अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदोगदं वुत्तन्तं सुमरदि ण वत्ति।

[ अद्य स राजर्षिरिष्टिं[h] परिसमाप्य[i] ऋषिभिर्विसर्जित[j] आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति[k] न वेति )

---

($a$) प्र + विश् अभ्यन्तर गमने; विशति। अविक्षत्। ( $b$ ) अव + चि + अच् भावे। ( $c$ ) सह समानं ख्यायते ; ख्या + डिन्; नि०; स्त्रीत्वेङीप्। ( $d$ ) गंधं आमोदं अर्वति; अर्व + अच; गंधर्वस्येदं अण्। ( $e$ ) वि + धा + कि कर्मणि। ( $f$ ) कल्ये प्रातः काले अण्यते ; अण् + घञ्। ( $g$ ) निर् + वृ + क्त कर्तरि। ( $h$ ) यज् + क्तिन् कर्मणि। ( $i$ ) परि + सम् + आप् + य। ( $j$ ) वि + सृज् + णिच् + क्त। ( $k$ ) स्मृ स्मरणे ; स्मरति। अस्मार्षीत।

१—अभिनयन्त्यौ। २—हला पिअंवदे। ३—विवाह विहिणा।

(Then enter the two friends in the act of gathering flowers.)

Anasuya—Priyamvada, although my heart is satisfied that, by performance of the auspicious ceremony according to Gandharva form, Shakuntala has been united with a worthy husband, still there is some cause for anxiety.

Priyamvada—How ?

Anasuya—Having finished their sacrifice, the hermits permitted the royal sage to return today and he has entered his capital. Being in the company of the ladies of the harem, he may or may not remember what happened here.

( दोनों सखियाँ फूल बीनती हुई आती हैं )

अनसूया—यद्यपि गांधर्व विधि से शकुन्तला का विवाह होगया और उसे योग्य पति मिल गया इससे मन को आनंद हुआ पर कुछ चिन्ता तो बनी ही है।

प्रियंवदा—क्यों ?

अनसूया—आज ऋषियों ने यज्ञ समाप्त करके राजर्षि को बिदा कर दिया और उसने अपनी राजधानी में प्रवेश किया है; न जाने रनवास में रानियों से मिल कर उसे यहां के वृत्तान्त की सुध रहेगी या नहीं।

तत इति। ततः पुष्पाणां चयनं अभिनयन्त्यौ प्रियंवदानुसूये आगच्छतः। जवनिकायां अपसारितायां कुसुमसंग्रहं कुर्वन्त्यौ सख्यौ रंगभूमौ दर्शकानां दृष्टिपथं गते। प्रियंवद इति। यद्यपि शकुन्तला

गन्धर्वेषु प्रचलितेन विधानेन निवृत्तं सम्पन्नं कल्याणं विवाहमङ्गलं यस्याः तथाभूता सती अनुरूपं ( रूपस्य योग्यत्वेऽव्ययीभावः ) योग्यं भर्तारं पतिं गच्छतीति तथोक्ता जाता इति हेतोः मम चेतः सुखितं तथाति इयन्मात्रं विचारणीयम् ।

अद्येति । ऋषिभिः यज्ञं परिसमाप्य नगरं गन्तुं अनुज्ञातः स राजर्षिः अद्य आत्मनः नगरं राजधानीं प्रविश्य अन्तःपुरवर्तिनीभिः पत्नीभिः मिलितः अन्नत्यं शकुन्तलाविवाहरूपं वृत्तान्तं स्मरति न वा इति चिन्तनीयम् ।

## Notes.

अभिज्ञानशकुन्तलम्—अभिज्ञानेन (अभिज्ञायतेऽनेन-करणे ल्युट्) स्मृता शकुन्तला ( शाकु० ) तामधिकृत्यकृतं नाटकम् । नाटकेन सह अभेदोपचारात् नपुंसकत्वम् ।

शकुन्तला—शकुन्तैः लायते ला घञर्थे क । उक्तं कण्वेन—

> निर्जने तु वने यस्मात् शकुन्तैः परिरक्षिता ।
> शकुन्तलेति नामास्याः कृतं चापि ततो मया ॥

Hindu Law-givers enumerate eight forms of marriage :—

> ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः
> गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥

Gandharva form is defined as follows :—

> इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
> गान्धर्वः सतु विज्ञेयो मैथुन्यः कामसंभवः ॥

It is sanctioned for Kshattriyas :—

> गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ।

मनुः ३ । २६

कथमिव—'इव' वाक्यालंकारे ; *Cf.*—
सर्वदा क इव वा सहिष्यते—Kirata.
किमिव हि मधुराणां मण्डनं नाकृतीनाम्—Shakuntala.
सृजति सा कियतीमिव न व्यथाम्—Naishadha.
विना सीता देव्याः किमिव हि न दुःखं रघुपतेः—Uttara.

अन्तःपुरम्—अन्तः अभ्यन्तरे पुरं गृहम्। The inner apartment of a palace, set apart for ladies; so called from its being situated in the heart of the town for purposes of safety. By transference of epithets, it means the inmates of the female apartments.

प्रियंवदा—वीसद्धा होहि। ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति। तादो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति। [ विस्रब्धा[a] भव। न तादृशा[b] [c]आकृतिविशेषा गुणविरोधिनो[d] भवन्ति। तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति। ]

अनसूया—जह अहं देक्खामि, तह तस्स अणुमदं भवे। [ यथाहं पश्यामि, तथा तस्यानुमतं भवेत् ]

प्रियंवदा—कहं विअ। [ कथमिव ]

अनसूया—गुणवदे कण्णआ पडिवादणिज्जे त्ति अअं दाव पढमो संकप्पो। तं जइ देव्वं एव्व संपादेदि णं अप्पआसेण किदत्थो गुरुअणो। [ गुणवते कन्यका प्रतिपादनीयेत्ययं तावत् प्रथमः संकल्पः[e]। तं यदि दैवमेव संपादयति नन्वप्रयासेन कृतार्थो गुरुजनः ]

---

( *a* ) वि + स्रम्भ् + त + आ ( *b* ) तस्येवदर्शनमस्य; तद् + दृश + ट ; उप० स०। ( *c* ) आक्रियतेऽनया ; आ + कृ + क्तिन् करणे। ( *d* ) गुण + वि + रुध् + णिनिः। ताच्छील्ये। ( *e* ) सम् + कृप् + घञ् ; गुणे रस्यलः।

Priyamvada—Have confidence. Such excellent features are not without good qualities. But I do not know what father Kanva will do when he hears this matter.

Anasuya—So far as I know, it will meet with his approval.

Priyamvada—How ?

Anasuya—It is the first desire that the daughter be given to some worthy husband ; if it is accomplished by luck alone, the elders have their desire fulfilled without any effort.

प्रियंवदा—विश्वास रख; ऐसे सुंदर आकार के मनुष्य गुणहीन नहीं होते । पर पिता कण्व यह वृत्तान्त सुनकर न जाने क्या करेंगे ।

अनसूया—जहाँ तक मैं जानती हूँ इसका अनुमोदन करेंगे ।

प्रियंवदा—क्यों ?

अनसूया—यह मुख्य अभिलाषा होती है कि कन्या गुणी को दी जाय । यदि उसे भाग्य ही पूरा कर दे तो बड़े बूढ़े विना प्रयत्न के ही कृतार्थ हो जाते हैं ।

विस्रब्धेति । विश्वासयुक्ता भव । अत्र शंकया अलम् । तादृशाः दुष्यन्तसदृशाः आकृतीनां विशेषाः विशिष्टा आकृतयः गुणैः विरोद्धुं शीलं येषां तथाभूताः गुणविरहिता न भवन्ति । रूपवान्दुष्यन्तोऽनुचितं कर्म कर्तुं नार्हति । अहन्तु अन्ययैव चिन्तया व्याकुलीकृतास्मि ।

इदानीं विवाहे निष्पन्ने पिता कण्वः शकुन्तलाविवाहरूपं वृत्तान्तं श्रुत्वा किं करिष्यति—इति न जाने । यथेति । यथा (येन दृष्टिकोणेन) अहं विचारयामि तथा तातस्य अनुमोदितं भवेत् । यदि तातः मम विचारसरणिं आश्रित्य पश्यति तदा तस्यानुमोदने न संदेहः ।

गुणवत इति । कन्या शीलौदार्यादिगुणसम्पन्नाय वराय देया इति अयं मुख्योऽभिलाषः कन्याया गुरूणामिति भावः । यदि भाग्यं एव तं सफलीकरोति तर्हि प्रयत्नं विनैव गुरुजनः कृतार्थः ( कृतः अर्थः प्रयोजनं येन ) सफलमनोरथो जातः ।

## Notes

आकृति etc.—*Cf.*—

यत्राकृतिस्तत्र गुणा वसन्ति—Subhashita.

आकृति विशेषेषु आदरः पदं करोति—Malavika.

आकारसदृशप्रज्ञः—Raghu.

न ह्याकृतिः सुसदृशं विजहाति वृत्तम्—Mrichha.

आकृतिमनुगृह्णन्ति गुणाः—Vidhashal.

प्रियंवदा—( पुष्पभाजनं विलोक्य ) सहि, अवइदाइं बलिकम्म-पज्जत्ताइं कुसुमाइं (सखि, अवचितानि बलिकर्मपर्याप्तानि कुसुमानि ]

अनसूया—णं सहीए[1] सउन्दलाए सोहग्गदेवआ अच्चणीया [ ननु सख्याः शकुन्तलायाः *a*सौभाग्यदेवतार्चनीया ]

प्रियंवदा—जुज्जदि [ युज्यते ]

(तदेव कर्माभिनयतः)

---

( *a* ) सुभगायैहितं; द्विपदवृद्धिः ।

१—पिअ सहीए ।

(नेपथ्ये)

अयमहं भोः

अनसूया—(कर्णं दत्वा) सहि अदिधीणं विअ णिवेदिदं।
[ सखि, "अतिथीनामिव निवेदितम् ]

प्रियंवदा—णं उडजसणिणहिदा सउन्दला।
[ ननूटजᵇसंनिहिताᶜ शकुन्तला )

अनसूया—अज्ज उण हिअपण असंणिहिदा । होदु । अलं एत्तिएहिं कुसुमेहिं।
[ अद्य पुनर्हृदयेनासंनिहिता। भवतु। अलमेतावद्भिः कुसुमैः ]

( इति प्रस्थिते )

Priyamvada—(looking at the flower-basket) Friend, enough flowers have been gathered for the offering.

Anasuya—Have we not to worship the diety, presiding over Shakuntala's good fortune ?

Priyamvada—Right !

(Both continue gathering.)

(Behind the scene.)

Here am I, ho !

Anasuya—(listening) Friend, it is like the announcing of a guest.

---

( *a* ) अतति गच्छति न तिष्ठति ; अथवा न विद्यते द्वितीया तिथिर्यस्य ; अत् + इथिन् । उक्तं मनुना—अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते। ( *b* ) उटेभ्यस्तृणपर्णादिभ्यो जायते। उट + जन् + ड। ( *c* ) सम् + नि + धा + क्त कर्तरि।

Priyamvada—Well, there is Shakuntala in the cottage.

Anasuya—But her heart is not with her to-day. Well ; these flowers will do.

(They start).

प्रियंवदा—( फूलों की टोकरी देख कर ) सखी, पूजा के लिये काफी फूल इकट्ठे कर लिये।

अनसूया—क्या शकुन्तला की सौभाग्य-देवी की पूजा नहीं करनी है ?

प्रियंवदा—अच्छा !

( दोनों फूल बीनती हैं )

( नेपथ्य में )

यह मैं हूँ मैं।

अनसूया—( कान लगा कर ) यह तो अतिथि का सा बोल है।

प्रियंवदा—पर शकुन्तला तो कुटी पर है।

अनसूया—पर आज उसका चित्त ठिकाने नहीं है। अब रहने दो। इतने ही फूल बहुत हैं।

( दोनों चलती हैं )

पुष्पेति। कुसुमानां पात्रं दृष्ट्वा। सखि, बलिकर्मणे पर्याप्तानि पूजायै यथेष्टानि पूजानिर्वाहयोग्यानि पुष्पाणि संगृहीतानि।

नन्विति। ननु शंकायाम्। शकुन्तलायाः सौभाग्यस्य देवता अधिष्ठात्री देवी पूजनीया।

तदिति। पुष्पचयनं रूपयतः।

नेपथ्ये। नेपथ्यं रङ्गस्थलव्यतिरिक्तं जवनिकान्तरितं वर्णिकापरिग्रहणाय योग्यं नटवर्गस्थानम्। ( श्रीनिवासाचार्यः )

अयमिति । कोऽत्र अतिथिसत्काराय नियुक्तः ? श्रूयतां तावत् ? अतिथिरहं समागतः।

सखीति । आगन्तुकस्य इव सूचना । यथा अतिथिः समागत्य निवेदयति तथोक्तम् । कोपि अतिथिः समागत इति संभावयामि । नन्विति । ननु अवधारणे । शकुन्तला पर्णशालासमीपवर्तिनी । सा अतिथिसत्काराय नियुक्ता । अतः सा सत्कारं विधास्यति । अद्येति । अद्य पुनः सा मनसा पर्णशालायां नास्ति । दुष्यन्तगत-हृदया सा अतिथिसत्कारं कर्तुं न क्षमा । भवतु इति निषेधे । इयद्भिः एव कुसुमैः अलम् । अवचितान्येव कुसुमानि पूजार्थं पर्याप्तानि ।

नेपथ्ये

आः अतिथिपरिभाविनि,

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम्
स्मरिष्यति त्वां न स *a*बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥

पियंवदा—हद्धी[1] । अप्पिअं एव्व संवुत्तं । कस्सिंसपि पूआरुहे अवरद्धा सुण्णहिअआ सउन्दला । ( पुरोऽवलोक्य ) ण हु जस्सिं कस्सिं पि । एसो दुव्वासो सुलहकोवो महेसी । तह सविअ वेअबलु-फुल्लाए दुव्वाराए गईए पडिणिवुत्तो । को अण्णो हुदवहादो दहिदुं [2]पहवदि । [ हा धिक् । अप्रियमेव संवृत्तम् । कस्मिन्नपि पूजार्हे*b*

---

( *a* ) बुध् + णिच् + क्त कर्मणि । ( *b* ) पूजा + अर्ह् + अण् कर्मणि ।

1—हद्धी हद्धी 2—पभविस्सदि

अपराद्धा शून्यहृदया शकुन्तला । न खलु यास्मिन्कस्मिन्नपि । एष दुर्वासाः(a) सुलभ(b)कोपो महर्षिः । तथा शप्त्वा(c) वेगबलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः । कोऽन्यो (d)हुतवहाद्दग्धुं प्रभवति ।

अनसूया—गच्छ१ । पादेसु(e) पणमिअ णिवत्तेहि णं । जाव अहं अग्घोदअं उवकप्पेमि । [ गच्छ । पादयोः प्रणम्य निवर्तयैनं यावद-हमर्घोदकमुपकल्पयामि । ]

प्रियंवदा—तह [तथा] । ( इति निष्क्रान्ता )

अनसूया—( पदान्तरे स्खलितं निरूप्य ) । अम्हो । आवेअक्खलिदाए पब्भट्ठं मे अग्गहत्थादो२ पुप्फभाअणं (इति पुष्पोच्चयं रूपयति) [ अहो । आवेगस्खलितायाः प्रभ्रष्टं ममाग्रहस्तात्पुष्पभाजनम् । ]

(Behind the scene.)

Ah, Thou that dost slight a guest !

He—thinking of whom, with undivided attention, thou dost not notice the arrival of me—rich in penance—shall not remember that he married thee, though reminded, just as a drunkard does not remember the speech, made by him before.

Priyamvada—Alas ! A very unpleasant thing has indeed come to pass ! Shakuntala, absent-minded as she is, has offended some person, deserving reverence ; (looking forward) not an ordinary person ! It is the

---

( *a* ) दुःसाध्यं वासः गृहे वासनमस्य । ( *b* ) सु + लभ + खल् कर्मणि । ( *c* ) शप् आक्रोशे ; शपति । अशपत् । अशाप्सीत् । शशाप । शप्तुम् । शापः । ( *d* ) हुतं घृतादिकं वहति प्रापयति देवान् । वह + अच् । ( *e* ) पादेसु = पादयोः ; प्राकृते द्विवचनं नास्ति ।

१—गच्छ, गच्छ; पिअंवदे, गच्छ गच्छ । २—हत्थादो ।

great sage Durvasa, who is easily irritated. Having cursed in that way, he goes back with long and hasty strides which cannot be turned back. Who else, except fire, will be able to burn ?

Anasuya—Go ; bow at his feet and bring him back, while I make preparations for water and offerings of worship.

Priyamvada—All right.

(Exit.)

Anasuya—(Advancing a few steps and tumbling) Alas ! My flower basket has fallen from my hand, as I tumbled in hurry.

(Acts the gathering of flowers.)

( नेपथ्य में )

हे अतिथि का निरादर करने वालो !

जिसमें एकचित्त होकर ध्यान लगाने के कारण तू मुझ तपोधन का यहाँ आना नहीं जानती उसे याद दिलाने पर भी तेरी सुध इस तरह नहीं आवेगी जैसे उन्मत्त को पहले कही हुई बात की याद नहीं आती।

प्रियंवदा—हाय ! अनिष्ट हो ही गया ! शकुन्तला से बेसुधी में किसी पूजनीय का अपराध बन गया। ( आगे देखकर ) किसी ऐसे वैसे का नहीं। ये ज़रा ज़रासी बात पर क्रोध करने वाले महर्षि दुर्वासा हैं। शाप देकर इस तरह जलदी लंबे लंबे डग रख कर जाते हैं कि कोई रोक नहीं सकता। अग्नि के सिवाय और कौन जलाने में समर्थ होता है ?

अनसूया—तू जा ; पैरों पड़ कर उन्हें लौटा ला तब तक में अर्घ-जल सँजोती हूँ।

प्रियंवदा—अच्छा। (जाती है)

अनसूया—(थोड़ी दूर चल कर ठोकर खाती है) हाय, उतावली में ठोकर खाने से फूलों की टोकरी मेरे हाथ से गिर गई।

(फूल बीनती है)

आ इति। आः कोपे। अतिथिं अभ्यागतं परिभवति अवमन्यते सा तत्संबोधने।

विचिन्तयन्तीति। Prose order :—यं विचिन्तयन्ती अनन्य मानसा त्वं उपस्थितं तपोधनं मां न वेत्सि स बोधितः सन् अपि प्रमत्तः प्रथमं कृतां कथां इव त्वां न स्मरिष्यति।

Paraphrase :—यं दुष्यन्तं ध्यायन्ती नास्ति अन्यस्मिन् विषये मानसं यस्याः तथोक्ता त्वं पर्णशालायां आगतं तप एव धनं यस्य तं तपोनिधिं मां दुर्वाससं न जानासि स तव स्मृतिपात्रभूतः दुष्यन्तः स्मारितः सन् अपि उन्मत्तः पूर्वं उक्तां कथां इव पूर्वं स्वीकृतां त्वां न स्मरिष्यति।

हेति। हा इति विषादे। धिक् इति निन्दायाम्। अनिष्टं एव जातम्। शकुन्तला हृदयेनासन्निहिता इत्युक्त्वा यथा त्वया शंकितं तदेव प्रत्यक्षीभूतम्। कस्मिन् अपि सत्कारयोग्ये जने यथोचितं सत्कारं अकुर्वाणा शकुन्तला कृतापराधा जाता। तस्या हृदयं दुष्यन्ते लग्नं अन्यतश्च निवृत्तं अतः सा शून्यहृदया। सा यस्मिन् कस्मिन् अपि सामान्ये जने नापराद्धा। अयं सुलभः सहजः कोपः रोषः यस्य तथाभूतः महर्षिः दुर्वासाः। विचिन्तयन्तीत्यादिना शापं दत्वा वेगस्य जवस्य बलेन उत्फुल्लया उद्धतया निवारयितुमशक्यया गत्या पराङ्-

मुखो भूत्वा गतः। अग्नेः अन्यः कः दग्धुं समर्थो भवति। दुर्वाससं विना क एवं शप्तुं समर्थः।

गच्छेति। गच्छ तस्यान्तिकम्। तस्य पादयोः वंदनं कृत्वा तं प्रत्यानय। यावत्त्वं तं आश्रमं प्रत्यानयसि तावत् अहं ( अर्घश्च उदकं जलं च तयोः समाहारः ) अर्घोदकं सज्जीकरोमि। पदान्तर इति। अन्यस्मिन् पादक्षेपे गतिवैलक्षण्यं दर्शयित्वा। अम्हो इत्यव्ययं विषादे। सम्भ्रमेण स्खलितायाः मम हस्ताग्रात् ( हस्तस्य अग्रं वा हस्ते अग्रं। व्यधिकरण तत्पु०। अजाद्यदन्तमिति पूर्वनिपातः ) पुष्पाणां पात्रं भूमौ पतितम्। भूमौ पतितानां पुष्पाणां संग्रहं अभिनयति।

## Notes.

अर्घः—आपः क्षीरं कुशाग्राणि दधि सर्पिश्च तंडुलाः।
यवः सिद्धार्थकश्चैव अष्टांगोऽर्घः प्रकीर्तितः॥

काशीखंडे।

( प्रविश्य। )

प्रियंवदा—सहि, पकिदिवक्को सो कस्स अणुणअं गेण्हदि। किं वि उण साणुक्कोसो किदो [ सखि, प्रकृतिवक्रः स कस्यानुनयं[a] गृह्णाति। किमपि पुनः सानुक्रोशः[b] कृतः]

अनसूया—तस्सिं बहु एदं पि। कहेहि [ तस्मिन्बह्वेतदपि। कथय ]

---

(*a*) अनु + नी + अच्। (*b*) अनु + क्रुश् (आह्वाने रोदने च) + घञ्; परदुःखापहरणेच्छारूपदयया हि परक्रोशं दृष्ट्वा तदनुरोदनं क्रियते—इति तस्यास्तथात्वम्।

प्रियंवदा—जदा णिवत्तिदुं ण इच्छदि तदा णिग्गाविदो मए। भअवं, पढमं त्ति पेक्खिअ अविणणादतवप्पहावस्स दुहिदुजणस्स भअवदा एक्को अवराहो मरिसिदव्वोत्ति [ यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया : भगवन्, प्रथम इति प्रेक्ष्याविज्ञाततपः $^{a}$प्रभावस्य $^{b}$दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति ]

अनसूया—तदो तदो [ ततस्ततः ]

प्रियंवदा—तदो मं वअणं अण्णहाभविदुं णारिहदि । किंदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदि त्ति मन्तअन्तो एव्व अन्तरिहिदो [ ततो मे वचनमन्यथा भवितुं नार्हति किंत्वभिज्ञानाभरणादर्शनेन शापो निवर्तिष्यत इति मंत्रयन्नेवान्तर्हितः ]

अनसूया—सक्कं दाणिं अस्ससिदुं[1] । अत्थि तेण राएसिणा संपत्थिदेण सणामहेअङ्किअं अंगुलीअअं सुमरणीअंत्ति सउन्दलाए हत्थे सअं ज्जेव पिणद्धं । तस्सिं साहीणोवाआ सउन्दला भविस्सदि [ शक्यमिदानीमाश्वसितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन $^{c}$स्वनामधेयांकितमंगुलीयकं स्मरणीयमिति शकुन्तलाया हस्ते स्वयमेव पिनद्धम्$^{d}$ । तस्मिन्स्वाधीनोपाया$^{e}$ शकुन्तला भविष्यति ]

प्रियंवदा—सहि, एहि । देवकज्जं दाव णिव्वत्तेह्म । [ सखि, एहि । देवकार्यं तावन्निर्वर्तयावः ]

( इति परिक्रामतः । )

प्रियंवदा—( विलोक्य[2] ) अणसूए, पेक्ख दाव । बामहत्थोवहिदवअणा आलिहिदा विअ पिअसही । भत्तुगदाए चिन्ताए अत्ताणं पि

---

(*a*) भू + घञ् भावः, प्रकृष्टो भावः । (*b*) दुह् + तृच् (उणा० नि०); (*c*) नामन् + धेय स्वार्थे । (*d*) अपि + नह् + क्त; अकारस्य लोपः । (*e*) उपाय्यतेऽर्थोनेन; उप + अय + घञ् करणे ।

१—समस्सदिदुं । २—अवलोक्य ।

ण एसा विभावेदि। किं उण आअन्तुअं [ अनसूये, पश्य तावत्। वामहस्तोपहितवदनालिखितेव प्रियसखी। भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति। किं पुनरागन्तुकम् ]

अनसूआ—पिअंवदे, दुवेणं पव्व[1] णो मुहे एसो वुत्तन्तो चिट्ठदु। रक्खिदव्वा क्खु पकिदिपेलवा पिअसही। [ प्रियंवदे, द्वयोरेव नौ मुख एष वृत्तान्तस्तिष्ठतु। रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी। ]

प्रियंवदा—को णाम[2] उण्होदएण णोमालिअं सिञ्चेदि [ को नामोष्णोदकेन नवमालिकां सिञ्चति। ]

( इत्युभे निष्क्रान्ते )

विष्कम्भकः

(Entering.)

Priyamvada—Being ill-tempered, whose persuasion will be accepted ? He has, however, been a little softened.

Anasuya—Even this is much of him. Go on.

Priyamvada—When he did not want to return, I entreated him thus :—" Revered Sir, considering that this is the first time, this offence of one, who is like your daughter and unaware of the power of penance, will be pardoned by your reverence."

Anasuya—Yes, then ?

Priyamvada—Then saying —" My words cannot be otherwise but at the sight of some ornament of recognition, the curse shall cease "—he disappeared.

---

१—एव्व णं। २—दाणिं।

Anasuya—Then we can breathe freely because that royal sage, when departing, himself fastened on Shakuntala's finger, as a token of remembrance, a ring on which his name was engraved. With that Shakuntala will have the remedy in her power.

Priyamvada—Friend, come; let us finish our worship.

( Both walk on.)

Priyamvada—( Looking outside ) Anasuya, just see; our dear friend looks as if she were painted—with her face resting on her left hand. Her thoughts being absorbed in her husband, she is not aware even of herself; what to say of a guest.

Anasuya—Priyamvada, let this matter remain in the mouth of us two only. Our dear friend is of delicate nature. She must be spared.

Priyamvada—Who would pour hot water on the jasmine? (Exeunt.)

End of Prelude.

( प्रवेश करके )

प्रियंवदा—हे सखी, उस महर्षि का स्वभाव टेढ़ा है। कौन उसे सीधा कर सकता पर मैंने कुछ ढीला किया है।

अनसूया—उसका कुछ ढीला होना भी बहुत है। हां कह।

प्रियंवदा—जब वह लौटने को राजी नहीं हुआ तब मैंने कहा कि हे भगवन्, यह आपकी कन्या के समान है; अपराध पहली ही

वार हुआ है और यह तप के प्रभाव को जानती नहीं है; यह विचार कर एक अपराध आपको क्षमा करना चाहिये।

अनसूया—हां, फिर?

प्रियवंदा—तब वह बोला कि मेरा वचन झूठा नहीं हो सकता पर सुध दिलाने वाला अलंकार देखने से शाप मिट जायगा। यह कहता कहता वह अन्तर्धान हो गया।

अनसूया—तो अब मेरी जान में जान आई क्योंकि जब वह राजर्षि जाने लगा था तब अपनी मुँदरी, जिस पर उसका नाम खुदा था, शकुन्तला की उँगुली में यों कह कर पहना गया था कि इससे मेरी याद बनी रहेगी। इससे उपाय शकुन्तला के हाथ में ही रहेगा।

प्रियंवदा—सखी, चल; देवताओं की पूजा से निवट लें। ( चलती हैं )

प्रियवंदा—( देखकर ) हे अनसूया, देख तो—प्यारी सखी बायें हाथ पर मुँह रख कर कैसी चित्र लिखी सी दीख रही है। पति के ध्यान में ऐसी बेसुध हो रही है कि इसे अपनी भी सुध नहीं है; फिर आये गये की तो बात ही क्या है?

अनसूया—प्रियवंदा, यह शाप की बात हम दोनों के मुँह से बाहर न जाय। प्रिय सखी का स्वभाव बड़ा कोमल है। उसे मत सुनाना।

प्रियवंदा—ऐसा कौन होगा जो चमेली की बेल पर तत्ता पानी छिड़के।

( दोनों जाती हैं )

विष्कंभक।

सखीति। स्वभावेन कुटिलः स दुर्वासाः कस्य प्रसादनं स्वी-करोति। कियन्मात्रं पुनः अनुक्रोशः दया तेन सह वर्तमानः तथा भूतः सम्पादितः।

यदेति। यदा स आश्रमं प्रत्यागन्तुं न इच्छति तदा मया एवं निवेदितः। भगवन्, प्रथमं नूतनं इति विचार्य अविज्ञातः तपसः भवतः तपसः प्रभावः शक्तिः यस्य तथा भूतस्य निजदुहितृनिर्वि-शेषस्य जनस्य एकः अपराधः त्वया क्षन्तव्यः।

तत इति। ततः मम वचः श्रुत्वा वक्ष्यमाणप्रकारेण व्याहरन् स तिरोहितः। तेन किं मंत्रितमित्याह—मम वचनं व्यर्थीभवितुं न अर्हति। दुष्यन्तः शकुन्तलां अवश्यं विस्मरिष्यति। किन्तु स्मारकं यद्भूषणं तस्य दर्शनेन शापः अपगमिष्यति। शक्यमिति। तर्हि शाप प्रशमनोपाये श्रुते जीवितुं शक्यम्। कुतः गन्तुकामेन तेन राजर्षिणा स्वस्य नाम्ना चिह्नितं अङ्गुलीयकं ऊर्मिका स्मरणाय हितं इत्युक्त्वा शकुन्तलाया अङ्गुल्यां स्वयमेव न्यस्तम्। अतः तस्मिन् विद्यमाने शकुन्तला स्वाधीनः स्ववशः उपायः यस्याः तथाभूता भविष्यति। स्मरणीयं अलंकारं तस्या हस्ते वर्तमानं; यदा सा प्रत्य-भिज्ञाने राज्ञः शैथिल्यं ज्ञास्यति तदा मुद्रिकां दर्शयिष्यति।

सखीति। आगच्छ। देव पूजां सम्पादयावः। तावत् अनवधा-रणे ! पश्येति। वामे सव्ये हस्ते करे उपहितं धृतं वदनं मुखं यया तथाभूता शकुन्तला चित्रिता इव दृश्यते। भर्तरिगतया पतिसम्ब-न्धिन्या चिन्तया ध्यानेन स्वदेहव्यापारं अपि न जानाति। किं पुनः उपस्थितं अतिथिम्।

प्रियमिति। एष शापरूपः वृत्तान्तः द्वयोः आवयोः मुखे तिष्ठतु। तस्यै न कथनीयः। प्रकृत्या स्वभावेन पेलवा कोमला प्रिय सखी रक्षितव्या।

क इति। कः संतप्तजलेन नवमालिकां सिंचति। अस्य वृत्तान्तस्य श्रावणेन सुकुमारी शकुन्तला नितरां दुःखाभिभूता भविष्यतीत्यर्थः।

## Notes

भगवन्—देवानामपि ये देवा महात्मानो महर्षयः
भगवन्निति ते वाच्या यास्तेषां योषितस्तथा॥ भरतः

वामहस्त Etc.—*Cf.*

अपास्तपाथोरुहि शायितं करे करोषि लीलानलिनं किमाननम्।

विष्कम्भकः— Naishadha.

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः
संक्षिप्तार्थस्तु विष्कंभ आदावंकस्य दर्शितः।
मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः
शुद्धः स्यात्स तु सङ्कीर्णो नीचमध्यमकल्पितः। ( साहित्यदर्पणे )

इति विष्कंभकः।

( ततः प्रविशति सुप्तोत्थितः शिष्यः। )

शिष्यः—"वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासा-[१]दुपावृत्तेन काश्यपेन। प्रकाशं[b] निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या[c] इति। ( परिक्रम्यावलोक्य च ) हन्त प्रभातम्[d]। तथा हि

यात्येकतोऽस्तशिखरं पतिरोषधीना-[e]
माविष्कृतो[२]ऽरुण[f]पुरःसर एकतोऽर्कः[g]।

---

(*a*) वेल गतौ; पचाद्यच्; टाप्। (*b*) काशृ दीप्तौ; घञ्। (*c*) रज्यतेऽत्र; रज्ज+कनि वा ङीप्। (*d*) भा+क्त; प्रकृष्टं भातमत्र। (*e*) ओषः प्लोषः दीप्तिर्वा धीयतेऽत्र ; ओष+धा+कि (*f*) ऋ+उनन् ; उणा०। (*g*) अर्च+घञ् कुत्वं; उणा०।

१—उपनिवृत्तेन। २—आविष्कृतारुण०।

तेजोद्वयस्य युगपद्[a]व्यसनोदयाभ्यां[b]
लोको[c] नियम्यत इवात्म[d]दशान्तरेषु ॥ १ ॥

(Enters a pupil who has just arisen from sleep.)

Pupil—His reverence Kashyapa has just returned from his journey. He has ordered me to ascertain the time. Going out into the open air, I'll see how much of the night remains.

( Walking round and looking about ).

Oh! It is day-break ; for

On the one side the moon goes to the peak of the setting mountain ; on the other the sun rises, preceded by the dawn. By the simultaneous rise and fall of these two luminaries man is, as it were, reconciled in the changes of his condition.

( एक शिष्य सोते से उठकर आता है )

शिष्य—महात्मा कण्व अभी परदेश से आये हैं। उन्होंने मुझे आज्ञा दी है कि समय का निश्चय कर आ। सो मैं बाहर जाकर देखता हूँ कि रात कितनी बाकी है।

( इधर उधर फिर कर और देख कर )

अहा ! यह तो सबेरा हो चला ; क्योंकि एक ओर तो चन्द्रमा अस्त होता है और एक ओर सारथी को आगे करके सूर्य प्रकट

---

(a) असु क्षेपणे ; भावकर्मकरणादौ ल्युट् । (b) उत् + इ + अच् । (c) लोक्यतेऽसौ ; लोक + घञ् । (d) अत + मनिण् ; अत सातत्यगमने; सातिभ्यां मनिन् — मनिणौ—इति मनिण् ।

होता है। इस प्रकार तेजोमय सूर्यचंद्र के साथ साथ उदय और अस्त से लोगों को अपनी दशा में परिवर्तन होने की मानो शिक्षा मिलती है।

तन इति। ततः आदौ सुप्तः पश्चात् उत्थितः शिष्यः रंगभूमिं समागच्छति।

वेलेति। प्रवसत्यस्मिन् इति प्रवासः तस्मात् देशान्तरात् प्रत्यागतेन पूज्येन काश्यपेन समयस्य निर्णयार्थं आज्ञप्तः अस्मि। उटजाद्बहिर्गतः तावत् अवलोकयामि क्षपायाः कियन्मात्रं अवशिष्टम्। कतिपयैः पदैः सञ्चर्य हन्त हर्षे।

Prose Order :—यातीति। एकतः ओषधीनां पतिः अस्तशिखरं याति; एकतः अरुणपुरःसरः अर्कः आविष्कृतः; लोकः तेजोद्वयस्य युगपत् व्यसनोदयाभ्यां आत्मदशान्तरेषु नियम्यत इव।

Paraphrase :—एकस्यां दिशि तृणज्योतिषां पोषकः चन्द्रः अस्ताचलचूड़ां गच्छति; अन्यस्यां दिशि अरुणः अनूरुः पुरःसरः सारथिः यस्य तथाभूतः सूर्यः प्रकटीभूतः। लोकः जनः तेजोद्वयस्य चन्द्रसूर्यरूपस्य एकदा व्यसनं चन्द्रस्य अस्तमनं सूर्यस्य च उदयः आविर्भावः ताभ्यां आत्मनः सुखदुःखात्मकेषु अवस्थाविशेषेषु शिक्ष्यते इव। व्यसनोदयौ सर्वसाधारणौ इति विचार्य धीमता समदुःखसुखेन भाव्यमिति भावः।

## Notes.

**पतिरोषधीनाम्**—Moon stimulates the growth of herbs; hence she (he) is called ओषधिपति। *Cf.*

पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः।

Gita ; XV. 13.

**तेजोद्वयस्य** Etc.—*Cf.*

कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ।

Meghadutam.

अपि च अन्तर्हिते शशिनि सैव कुमुद्वती[a] मे
दृष्टिं न [b]नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ २ ॥

And also:—

The moon having set, the same lily—with her beauty to be recalled from memory—does not please my eyes. To the weaker sex, pangs, caused by separation from lovers, are, no doubt, extremely unbearable.

और देखो—

चंद्रमा का उदय हो रहा था तब जो कुमुदिनी नेत्रों को प्रसन्न कर रही थी वही चन्द्रमा के अस्त हो जाने पर मेरी दृष्टि को प्रसन्न नहीं करती क्योंकि उसकी शोभा प्रत्यक्ष नहीं रही—मुझे केवल उसकी याद बनी है। वास्तव में स्त्रियों के लिये पति-वियोग का दुःख सहना बहुत ही कठिन है।

अन्यच्च। अन्तरिति Prose order:—शशिनि अन्तर्हिते सा एव कुमुद्वती संस्मरणीयशोभा सती मे दृष्टिं न नन्दयति; अबलाजनस्य इष्टप्रवासजनितानि दुःखानि नूनं अतिमात्रसुदुःसहानि।

---

(*a*) कुमुद ( कौ मोदते कु + मुद + क ७ त ० ) + ड् मतुप्; मय इति मस्य वः। (*b*) caus. from नन्द् to be happy; नन्दति। ननन्द। नन्दिता। नन्दिष्यति। नन्द्यात्। अनन्दीत्। नन्द्यते। नन्दितः। नन्दित्वा।

Paraphrase :—चन्द्रे तिरोहिते सति सा एव पूर्वं अवलोकिता कुमुदिनी संस्मरणीया स्मरणविषयिणी नतु प्रत्यक्षा (तस्या मुकुलितत्वात्) शोभा कान्तिः यस्या तादृशी सती मम नयनं न प्रीणयति। तथाहि स्त्रीजनस्य इष्टस्य प्रियस्य प्रवासः देशान्तरस्थितिः तेन जनितानि उत्पादितानि दुःखानि मात्रामतिक्रम्य अतिमात्रं अतिमात्रसुदुःसहानि ( अत्यादयः क्रान्ताद्यर्थे इति तत्पु० ) अतिदुःखेनैव सोढुं शक्यानीति निश्चितम्। प्रियवियोगे नार्यः शोभाहीना भवंतीतिभावः।

( प्रविश्या[1]पटीचेपेण )

अनसूया—जइ वि[2] णाम विसअपरम्मुहस जणस्स[3] एदं ण विदिअं तह वि तेण रएणा सउन्दलाए अणज्जं आअरिदं। [ यद्यपि नाम विषयपराङ्मुखस्य जनस्यैतन्न विदितं तथापि तेन राज्ञा शकुन्तलायामनार्यमाचरितम्। ]

शिष्यः—यावदुपस्थितां होमवेलां गुरवे निवेदयामि। (निष्क्रान्तः।

अनसूया—पडिबुद्धा वि किं करिस्सं। ण मे उइदेसु वि णिअकरणिज्जेसु[4] हत्थपाआ पसरन्ति। कामो दाणि सकामो होदु। जेण असच्चसंधे जणे [5]सुण्णहिअआ सही पदं कारिदा। अहवा दुव्वासस्सो [6]कोवो एसो विआरेदि। अण्णहा कहं सो राएसी तारिसाणि मन्तिअ एत्तिअस्स[7] कालस्स लेहमेत्तं पि ण विसज्जेदि। ता इदो[8] अहिण्णाणं अंगुलीअअं से विसज्जेम। दुक्खसीले[9] तवस्सिजणे को अब्भत्थीअदु। णं सहीगामी दोसो त्ति ववसिदा वि ण पारेमि पवासपडिणिउत्तस्स तादकस्सवस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदिदुं। इत्थंगए अह्मेहिं किं करणिज्जं।

---

१—पटाचेपेण। २—जइ वि—एव्वं वि ३—वि जणस्स। ४—कज्जेसु। ५—सुद्ध हिअआ। ६—सावो। ७—एत्ति अस्स वि। ८—इदो इति क्वचिन्नास्ति। ९—दुस्सीले।

[ प्रतिबुद्धापि किं करिष्ये। न मे (a)उचितेष्वपि निजकार्येषु हस्तपादं प्रसरति। काम इदानीं सकामो भवतु। येनासत्यसंधे जने शून्यहृदया सखी पदं कारिता। अथवा दुर्वाससः कोप एष विकारयति अन्यथा कथं स राजर्षिस्तादृशानि मंत्रयित्वैतावत्कालस्य लेखमात्रमपि न विसृजति। तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः। दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम्। ननु सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम्। (b)इत्थंगतेऽस्माभिः किं करणीयम्। ]

(Entering with a toss of the curtain).

Anasuya—Though it is possibly not known to persons (like us) who are averse to wordly affairs, yet the King has not behaved properly towards Shakuntala.

Pupil—I will inform my precepter that the time for sacrifice has arrived.

(Exit.)

Anasuya—Although I have arisen from sleep, what shall I do ? My hands and feet do not move even for usual duties. May Cupid be gratified now, by whom our absent-minded friend has been made to repose confidence in a man who is not true to

---

(a) वच् + कितच् ; रुचि-वचि-कुचि-कुटिभ्यः कितच्। (b) इदम् + थमु ( अनेन प्रकारेण इत्यर्थे )।

his word. Or rather it is due to the curse of Durvasa ; otherwise how that royal sage, having talked like that, has not sent even a letter for such a long time! Should we send him the ring—the token of recognition ? But who among the ascetics, used to hardship, may be requested (to carry the ring to him)? If I make up my mind to report to father Kanva, who has returned from his journey, that Shakuntala has been married to Dushyanta and is quick with child, I cannot do so as the fault lies with my friend. This being the case, what are we to do ?

( परदा हटा कर आती है )

अनसूया—यद्यपि ( हम सरीखे ) जो संसार की बातों से विमुख हैं उन्हें यह कदाचित् नहीं मालूम है ( कि पतिका वियोग सहना स्त्रियों के लिये कितना कठिन है ) पर उस राजा ने शकुन्तला के साथ अच्छा बर्ताव नहीं किया।

शिष्य—अब होम का समय हुआ, जाकर गुरुजी से कह दूँ ।

( बाहर जाता है )

अनसूया—मैं उठ तो बैठी पर करूँगी क्या ? प्रतिदिन के आवश्यक काम करने के लिये भी हाथ पैर नहीं चलते। अब कामदेव का मनोरथ सफल हो जिसने शून्य हृदय वाली सखी से झूठी प्रतिज्ञा वाले राजा में विश्वास कराया ; अथवा दुर्वासा के कोप के कारण यह अनर्थ हुआ है ; नहीं तो कैसे वह राजर्षि ऐसे ऐसे वचन कहकर अबतक कोई पत्र भी न भेजता ? क्या याद दिलाने

को अँगूठी उसके पास भेज दें ? पर दुखिया तपस्वियों में से किससे ले जाने को कहा जाय ! पिता कराव परदेश से आगये हैं ; अगर मैं उनसे कहने का इरादा भी करूँ कि शकुन्तला का विवाह राजा दुष्यन्त के साथ हो गया है और वह गर्भवती है, तो भी कह नहीं सकती क्योंकि दोष तो मेरी सखी का ही है। ऐसी दशा में अब हमें क्या करना चाहिये ?

अपटीति । अपटोत्क्षेपः—अपटस्याः काण्डपटस्य क्षेपः । प्रावरणपटक्षेपे । नाट्ये हि प्रावरणपटे अन्यैराक्षिप्ते एव पात्र-प्रवेशोऽभिनयसम्प्रदायस्तमुल्लंघ्य पात्रेण यत्र काण्डपटं स्वयं क्षिप्त्वा प्रविश्यते तेन चाकस्मिकत्वं तत्प्रवेशस्य गम्यते ।

यद्यपीति । यद्यपि विषयेभ्यः इन्द्रियग्राह्येभ्यः पराक् मुखं अस्य तथाभूतस्य निवृत्तस्य एतत् इष्टप्रवासजनितानीत्यादिना श्लोकां-शेन प्रकटीकृतं न ज्ञातं तथापि एतावत्तु ज्ञायते एव यत्तेन राज्ञा शकुन्तलायां असत् व्यवहृतम् । नाम संभावनायाम् । प्रियस्य प्रवा-सात् अवलानां हृदये कियती व्यथा भवतीति मया शकुन्तलया वा न ज्ञायते विषय पराङ्मुखत्वात् किन्तुः राज्ञः शकुन्तलां प्रति व्यवहारो न भद्रजनोचितः ।

यावदिति । यावत् अवधारणे । आसन्नवर्तिनीं होमवेलां गुरवे काश्यपाय सूचयामि ।

प्रतीति । शयनात् उत्थिता अपि किं करिष्यामि । किमपि कर्तुं न पारये । अभ्यस्तेषु अपि स्वकृत्येषु ( हस्तौ पादौ च ) हस्तपादं न चेष्टते । मदनः इदानीं राज्ञि शकुन्तलायां उपेक्षितायां पूर्णाभिलाषो भवतु; कुतः तेन मदनेनैव अन्यमनस्का शकुन्तला असत्या वितथा संधा प्रतिज्ञा यस्य तथाभूते जने विश्वासं कर्तुं प्रेरिता । अथवा नास्ति कामस्य अपराधः । एष दुर्वाससः शापः अन्यथा करोति । अन्यथा शापस्य प्रभावं विना स राजर्षिः तादृशानि विश्रम्भ वच-

नानि रहसि उक्त्वा एतावत्कालं पर्यन्तं पत्रं अपि न प्रेषयति—अत्र किं कारणम्? तस्मात् शापनिवृत्यर्थं अस्मात् स्थानात् दुष्यन्तं प्रति स्मारकं अंगुलीयकं प्रेषयावः। एवं निर्धारिते सति व्रतोपवासादिनिरते तपस्विजने कः मुद्रिकानयनाय प्रार्थ्यताम्? न कोपीत्यर्थः। ननु अवधारणे। प्रवासात् प्रत्यागतस्य तातकाश्यपस्य दुष्यन्तेन ऊढां आपन्नं प्राप्तं सत्वं यया तथाभूतां गर्भिणीं शकुन्तलां निवेदयितुं उद्युक्ता अपि शकुन्तलैव रहसि प्रणय कृत्वा अनवधानतया च दुर्वाससः कोपभाजनं भूत्वा अपराधिनी जाता इति विचार्य वक्तुं न शक्नोमि। इत्थं गते एवं स्थिते सति अस्माभिः किं करणीयम्।

( प्रविश्य )

प्रियंवदा—(सहर्षम्।) सहि,तुवर[1] सउन्दलाए पत्थाणकोदुअं णिव्वत्तिदुं।

[ सखि, त्वरय शकुन्तलायाः प्रस्थानकौतुकं[a] निर्वर्तयितुम्। ]

अनसूया—सहि कहं एदं [ सखि, कथमेतत्। ]

प्रियंवदा—सुणाहि। दाणिं सुहसइदपुच्छिआ सउन्दलासआसं [2]गदह्मि। तदो [3]दाव णं लज्जावणदमुहिं परिस्सजिअ [4]तादकस्सवेण एव्वं अहिणन्दिदं। दिट्ठिआ धूमाउलिददिट्ठिणो वि जअमाणस्स पाअए एव्व आहुदी पडिदा। वच्छे, सुसिस्सपरिदिण्णा विज्जा[5] विअ असोअणिज्जा संवुत्ता। अज्ज एव्व [6]इसिरक्खिदं तुमं भत्तुणो सआसं विसज्जेमि त्ति।

---

(a) कुतुकस्यभावः युवादि० अण् स्वार्थे।

१—तुवर तुवर। २—एतदनन्तरं क्वचित् अनसूया—तदो तदो। प्रियंवदा—अयमंशो दृश्यते। ३—जाव। ४—सअं तादकस्सवेण। ५—विअ विज्जा। ६—इसिपडिरक्खिदं।

[ शृणु । इदानीं सुखशयनप्रच्छिका[a] शकुन्तलासकाशं गतास्मि ततस्तावदेनां [b]लज्जावनतमुखीं परिष्वज्य तातकाश्यपेनैवमभिनन्दितम् । दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । सुशिष्यपरिदत्ता विद्येवाशोचनीया संवृता । अद्यैव ऋषिरक्षितां त्वां भर्तुः सकाशं विसर्जयामीति । ]

अनसूया—अह केण सूइदो तादकस्सवस्स अअं वुत्तन्तो । [ अथ केन सूचितस्तातकाश्यपस्यायं वृत्तान्तः । ]

प्रियंवदा—अग्गिसरणं पविठ्ठस्स सरीरं विणा छन्दोमईए वाआए[1] ।

[ अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाचा । ]

अनसूया—( सविस्मयम्[c] ) कहं विअ ( कथमिव )

प्रियंवदा—(संस्कृतमाश्रित्य । )

दुष्यन्तेनाहितं तेजो दधानां[d] भूयते भुवः
अवेहि तनयां [e]ब्रह्मन्नग्निगर्भा शमीमिव[f] ॥ ३ ॥

(Entering.)

Priyamvada—(with joy) Friend, make haste to arrange auspicious preparations for Shakuntala's departure.

---

(*a*) प्रच्छ् ज्ञीप्सायाम् ; पृच्छति । अपृच्छत् । अप्राक्षीत् । पप्रच्छ । प्रष्टुम् । पृष्टः । (*b*) लस्ज + अङ् + टाप् । (*c*) वि + स्मि + अच् । (*d*) धा धारणे ; दधाति—धत्ते । अदधात्—अधत्त । अधात्—अधित । दधौ—दधे । हितः । हित्वा । धातुम् (*e*) बृंह + मनिन् ( उणा० ) । (*f*) शम् + इन् वा ङीप् ।

१—वाणि आए । 'वा आए' एतदनन्तरं क्वचित् अनसूया—(सविस्मयं) कहंविअ । प्रियंवदा—इति नास्ति ।

Anasuya—How is it, friend ?

Priyamvada—Listen. I had been to Shakuntala just now to inquire if she had a sound sleep when father Kanva embraced her—whose face was turned downwards on account of bashfulness—and thus congratulated her :—" Fortunately, the oblation of the sacrificer, though his eyes were dimmed by smoke, has fallen into the fire. Child, thou, like knowledge imparted to a good student, hast ceased to be a cause of anxiety. This very day I shall send thee to thy husband, guarded by the sages."

Anasuya—By whom was this matter reported to revered Kanva ?

Priyamvada—By a metrical speech without a body when he entered the fire-house.

Anasuya—(wondering) How ?

Priyamvada—(in Sanskrit) " O Brahman, know that your daughter holds the seed, put by Dushyanta for the good of the world, as the Sami tree holds fire within."

( प्रवेश करके )

प्रियंवदा—( हर्ष के साथ ) सखी, शकुन्तला के प्रस्थान के मंगलाचार की तैयारी जल्दी कर।

अनसूया—सखी, यह क्या ?

प्रियंवदा—सुन ; अभी मैं शकुन्तला से पूछने गई थी कि रात में अच्छी तरह नींद आई या नहीं। वह लाज के मारे सिर झुकाए खड़ी थी। इतने में पिता कण्व ने उसे छाती से लगा कर इस तरह आनन्द प्रकट किया—"आज यजमान की दृष्टि धुएँ से धुँधली हो रही थी तोभी उसकी आहुति अग्नि में ही पड़ी। यह बड़े भाग्य की बात है। हे वत्से, जैसे योग्य शिष्य को विद्या देने से मन को खेद नहीं होता उसी तरह मुझे तेरा सोच नहीं है। आजही तुझे ऋषियों के साथ भर्ता के पास भेज दूँगा।

अनसूया—पिता कण्व से यह हाल किसने कहा ?

प्रियंवदा—जब मुनि होमशाला में पहुँचे तब आकाशवाणी छंद में कह गई।

अनसूया—( चकित होकर ) क्या कह गई ?

प्रियंवदा—( संस्कृत में ) हे मुनि, यह तुम जानलो कि तुम्हारी लड़की के गर्भ में वह तेज—जो राजा दुष्यन्त ने उसे पृथ्वी के अभ्युदय के लिये दिया है—उसी तरह है जैसे समी ( छोंकर ) की लकड़ी के भीतर अग्नि रहती है।

सखीति। शकुन्तलायाः पतिगृहगमनोचितं मंगलं सम्पादयितुं क्षिप्रतां कुरु।

शृणिवति। सम्प्रति सुखशयितं सुखनिद्रा तत्पृच्छतीति तथोक्ता अहं शकुन्तलायाः समीपं गता अस्मि। तस्मिन्नेव काले लज्जया व्रीडया अवनतं नम्रीभूतं मुखं यस्याः तथाभूतां शकुन्तलां आलिङ्गय तात काश्यपेन वक्ष्यमाणरीत्या संतोषसंकीर्णं आनन्दं उच्चारितम् किमुच्चारितमित्याह—पुत्रि, दिष्ट्या आनन्दे अव्ययम्। धूमेन अवरुद्धा आकुला दृष्टिः दर्शनं यस्य तथाभूतस्य अपि होतुः अग्नौ एव हवनीयं पतितम्। तथैव मया लोकाचारं आश्रित्य न दत्ता अपि त्वं

यथाभूतो वरो मया अभिलषितस्तादृशं एव गतवती । वत्से. सुपात्राय प्रतिपादिता विद्या इव मे अशोचनीया जाता असि । अद्य एव त्वां ऋषिभिः गोपितां भर्तुः समीपं प्रेषयामि ।

अथेति । अथ प्रश्ने । केन तातकाश्यपस्य शकुन्तलाविवाहरूपः वृत्तान्तः निवेदितः ।

प्रियमिति । अशरीरिण्या पद्यात्मिकया वाण्या होमशालां गतस्य तस्य वृत्तान्तः आख्यातः ।

दुष्यन्तेनेति । Prose order :—हे ब्रह्मन्, दुष्यन्तेन आहितं तेजः भुवः भूतये दधानां तनयां अग्निगर्भां शमीं इव अवेहि ।

Paraphrase :—हे विप्र, दुष्यन्तेन निहितं वीर्यं पृथ्व्याः अभ्युदयाय बिभ्रतीं कन्यां शकुन्तलां अग्निः गर्भे अभ्यन्तरे यस्याः तादृशीं शमीं तदाख्यं वृक्षं इव जानीहि ।

## Notes.

दिष्ट्या-भाग्येन—*Cf.*

अन्योन्यगतसौहार्दा दिष्ट्या दिष्ट्येतिचाब्रुवन्—Bhagwat.

दिष्ट्या प्रतिहतं दुर्जातम्—Malavika.

दिष्ट्यासोऽयं महाबाहुरंजनानन्दवर्धनः—Uttara.

शमी—*Cf.* शमीमिवाभ्यन्तरलीनपावकाम्—Raghu.

अनसूया—( प्रियंवदामाश्लिष्य । ) सहि, पिअं मे । किंदु अज्ज एव्व सउन्दला णीअदित्ति उक्कण्ठासाहारणं परितोसं अणुहोमि ।

[ सखि, प्रियं मे । किंत्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि । ]

प्रियंवदा—सहि, वअं दाव उक्कण्ठं विणोदइस्सामो । सा तवस्सिणी णिव्वुदा होदु [सखि, आवां तावदुत्कण्ठां विनोदयिष्याव: सा तपस्विनी[a] निर्वृता भवतु ।

अनसूया—तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएरसमुग्गए तण्णिमित्तं एव्व कालन्तरक्खमा णिक्खित्ता मए केसरमालिआ । तं तुमं हत्थसंणिहिदं करेहि । जाव अहंपि से गोरोअणा तित्थमित्ति-आदुव्वाकिसलआणि मंगलसमालम्भणाणि विरएमि [ तेन ह्येत-स्मिश्चूतशाखावलम्बिते नालिकेलसमुद्गके[b] तन्निमित्तमेव कालान्त रक्षमा निक्षिप्ता मया केसरमालिका[c] । तां त्वं हस्तसंनिहितां कुरु । यावदहमपि तस्यै गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गल-समालम्भनानि विरचयामि ]

प्रियंवदा—तह करीअदु [ तथा क्रियताम् ]

[अनसूया निष्क्रान्ता । प्रियंवदा नाट्येन सुमनसो गृह्णाति]

Anasuya— (embracing Priyamvada) Friend, That is to my delight but when I think that she will be sent today, I feel joy mixed with sorrow.

Priyamvada—Friend, we shall get rid of our sorrow. Let that poor girl be happy.

Anasuya—I have deposited for this occasion a garland of Bakul flowers, capable of keeping good for a long time, in a cocoanut casket, which is

---

(*a*) तपस् + विनि + ङीप् ; तपः सहस्राभ्यामिति विनिः (*b*) समुद्ग-च्छति, समुद्गम् + ड ( अ ) + कन् स्वार्थे । (*c*) मल संज्ञायाम् ; कर्तरि घञ् ; मालैव मालिका-कन् ; अत इत्वम् ।

suspended on a bough of that mango tree. Take it in your hand while I prepare auspicious unguents, composed of *Gorochana*, holy clay and Durva sprouts.

Priyamvada—Very well.

(Exit Anasuya; Priyamvada takes the flowers.)

अनसूया—( प्रियंवदा का आलिंगन करके ) यह बात तो मुझे बड़ी अच्छी लगी पर शकुन्तला आज ही जायगी यह सोचकर सुख के साथ दुःख भी होता है।

प्रियंवदा—सखी, हमारा तो दुःख से पीछा छुट जायगा। उस बिचारी को सुख मिले।

अनसूया—आम की डाल में जो नरेली लटकती है उसमें इसी अवसर के लिये मैंने ऐसे बकुल के फूलों की एक माला रख छोड़ी है जो बहुत दिन तक नहीं मुरझावें। तू उसे हाथ में लेले। तब तक मैं भी गोरोचन, तीर्थों की मिट्टी और दूब की कोंपल आदि से मंगल का उबटन तैयार करलूँ।

प्रियंवदा—बहुत अच्छा।

( अनसूया जाती है ; प्रियंवदा फूल लेलेती है )

सखीति। इमं वृत्तान्तं श्रुत्वा अहं आनन्दिता अस्मि किन्तु शकुन्तला अद्य एव पतिगृहं प्राप्यते इति विचार्य विषादसंकीर्णं हर्षं अनुभवामि। शकुन्तलायाः विवाहः तातस्य अनुमतः। अनेन अहं हृष्टा। किन्तु अद्यैव सा इता दूरवर्तिनी भविष्यतीति विमृश्य मम हृदये विषादः पदं करोति।

सखीति। तावत् अवधारणे। आवां तद्वियोगपीड़ां अपनेष्यावः। सा दीना सुस्थिता भवतु। तेनेति। तेन हि आम्रशाखायां अवस्था-

पिते नारिकेलकपालरचिते संपुटे प्रस्थानोचितमङ्गलार्थं एव मया (कालस्यअन्तरं) कालान्तरं तस्य क्षमा दीर्घकालेनापि विकारं अनापद्यमाना नकुलपुष्पाणां मालिका निहिता। तां त्वं हस्तयोः सन्निहितां हस्तवर्तिनीं कुरु। यावत् यत्कालं अभिन्याप्य अहं अपि ( गोभ्योजाता रोचना हरिद्रा ) गोरोचनां, तीर्थमृत्तिकां, दूर्वायाः अंकुरान् इत्येतानि ( मङ्गलाय समालभ्यन्ते विलिप्यन्ते अनेन ) मंगलार्थं अनुलेपनानि उपकल्पयामि।

तपस्विनी—तपस्वी तपस्विनी च अनयोः सद्भावे एव प्रयोगो दृश्यते ; –*Cf.*

घातिनस्तपस्वी सर्वार्थसिद्धः—Mudra.

किं किं व्यवस्यति न वेद्मि तपस्विनी सा–Sahitya.

नव प्रसूतिर्वरटा तपस्विनी–Naishadha.

केसरमालिका–केसर-बकुल Mimusops Elengi. It is said to put forth blossoms when sprinkled by young women with mouthfuls of wine. बकुलः सीधुगंडूषसेकात् ; कांक्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः Megh.

( नेपथ्ये )

गौतमि, आदिश्यन्तां शाङ्गरवमिश्राः(a) शकुन्तलानयनाय।

प्रियंवदा—( कर्णं दत्वा ) अनसूए, तुवर[1]। एदे क्खु[2] हत्थिणाउरगामिणो इसीओ सद्दावीअन्त [ अनसूये त्वरस्व। एते खलु हस्तिनापुरगामिन ऋषयः शब्दाप्यन्ते]

(प्रविश्य समालम्भनहस्ता )

अनसूया—सहि, एहि। गच्छह्म [ सखि, एहि। गच्छावः ]

---

(a) मिश्र + अच् ; संयुते उत्तरपदस्थः ; नित्यबहुवचनान्तः।

१—तुवरसु। २—'क्खु' इति क्वचिन्नास्ति।

( इति परिक्रामतः )

प्रियंवदा -( विलोक्य ) एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिदणीवाराहिं सोत्थिवाअणिआहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ। उवसप्पह्म णं [ एषा सूर्योदय एव शिखामज्जिता प्रतीष्ट(a) नीवार(b)ाभिः (c)स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एनाम् ]

( इत्युपसर्पतः )

(Behind the Scene.)

Gautami, order Sharangrava and others to escort Shakuntala.

Priyamvada.—(listening) Anasuya—look sharp. The sages, who have to go Hastinapur, are being called.

(Entering with auspicious unguents in her hands).

Anasuya.—Come, friend ; let us go.

(Both walk round.)

Priyamvada.—(looking). There sits Shakuntala, bathed overhead early at sunrise. She is being congratulated by the women of the hermitage, who invoke blessings on her with wild rice. Let us approach her.

(They approach her.)

---

(a) प्रति + इष् + क्त कर्मणि । (b) नि + वृ + घञ् ( नौवृधान्ये इति घञ दीर्घः ) । (c) सु + अस् + ति ।

( नेपथ्य में )

गौतमी, शार्ङ्गरव आदि से कह दो कि शकुन्तला को पहुँचाने जाना होगा।

प्रियंवदा—( कान लगाकर ) अनसूया, जलदी कर। हस्तिनापुर जाने वाले मुनि बुलाये जा रहे हैं।

( हाथ में उवटन लिये—प्रवेश करके )

अनसूया—आओ सखी, हम भी चलें।

( दोनों चलती हैं )

प्रियंवदा—( देखकर ) यह शकुन्तला सूरज निकलते ही सिर से नहाकर बैठी है और स्वस्ति बोलने वाली तपस्विनियाँ नीवार लेकर आशीर्वाद दे रही हैं। हम भी इसके पास चलें।

( पास जाती हैं )

गौतमीति। शकुन्तलां पतिगृहं नेतुं शार्ङ्गरवप्रभृतयः आज्ञाप्यन्ताम्।

प्रियमिति। एते खलु हस्तिनापुरं गन्तुं आदिष्टाः ऋषयः आहूयन्ते।

एषेति। एषा शकुन्तला सूर्योदये एव शिखया सह मज्जिता स्नाता प्रतीष्टा गृहीता नीवारा याभिः ताभिः स्वस्तिवाचनं मङ्गलसमये शुभाशीर्वादोच्चारणं तस्मिन् नियुक्ताः ताभिः आशिषा संवर्द्ध्यमाना तिष्ठति। अस्याः समीपं गच्छावः।

[ ततः प्रविशति यथोद्दिष्टव्यापारासनस्था शकुन्तला। ]

तापसीनामन्यतमा—( शकुन्तलां प्रति ) जादे, भत्तुणो बहुमाणसूअअं महादेईसद्दं लहेहि [ जाते, भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व ]

द्वितीया—वच्छे, वीरप्पसविणी होहि [ वत्से, वीरप्रसविनी भव ]

तृतीया—वच्छे, भत्तुणो वहुमदा होहि [ वत्से भर्तुर्वहुमता भव ]

( इत्याशिषो दत्वा गौतमीवर्जं निष्क्रान्ताः । )

सख्यौ—(उपसृत्य ) सहि, सुहमज्जणं दे होदु [सखि, सुखमज्जनं ते भवतु ]

शकुन्तला—साअदं मे सहीणं । इदो णिसीदह [स्वागतं मे सख्योः । इतो निषीदतम्[a] ]

उभे—(मङ्गलपात्राण्यादय उपविश्य। ) हला, सज्जा होहि । जाव दे मङ्गलसमालम्भणाइ विरएम [ हला, सज्जा भव । यावत्ते मङ्गल-समालम्भनानि विरचयावः ]

शकुन्तला—इदं पि वहु मन्तव्वं । दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि त्ति । [इति बाष्पं विसृजति ] [ इदमपि बहु मन्तव्यम् । दुर्लभमिदानीं[b] मे सखिमण्डनं भविष्यतीति ]

उभे—सहि, उइअं ण दे मङ्गलकाले रोइदुं[1] । ( इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः ) [सखि, उचितं न ते मङ्गलकाले रोदितुम् ]

प्रियंवदा—आहरणोइदं रूवं अस्समसुलहेहिं पसाहणेहिं विप्पआरी अदि [ आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ]

(Then enters Shakuntla on a seat, in the manner described.)

One ascetic woman.—(to Shakuntla). My child, may you get the title of chief queen, indicative of great regard by your husband !

---

(*a*) नि + सद् ; सीदति । असीदत् । असदत् । ससाद । सत्तुम् । सत्त्वा । सन्नः । (*b*) दुर् + लभ् + खल् ।

१—अस्सूइं विसज्जिदुं ।

Second woman—My child, may you be the mother of a hero !

Third woman—My child, may you be much esteemed by your husband !

(Exeunt all—Except Gautami—after giving blessings.)

Both friends—(approaching) Friend, May this bath be auspicious to you !

Shakuntala—Welcome to my friends. Sit down here.

Both—(taking up the vessels of auspicious things and sitting down) Friend, Be ready for we shall smear your body with auspicious unguents.

Shakuntala—It is also to be valued highly. Decoration by my friends will be rare now.

(Sheds tears.)

Both—Friends, it is not proper for you to shed tears at an auspicious time.

(Wiping away tears they decorate her)

Priyamvada.—Your body is worthy of ornaments. It is married by decorations available in the hermitage.

(ऊपर कही हुई रीति से आसन पर बैठी शकुन्तला प्रवेश करती है )

एक तपस्विनी—( शकुन्तला की ओर देखकर ) हे बेटी, तेरा नाम " महादेवी " हो जो पति के द्वारा अत्यन्त आदर होने का सूचक है ।

दूसरी तपस्विनी—बेटी, तू शूरवीर की माता हो !

तीसरी—बेटी, तू पति की प्यारी हो !

( आशीर्वाद देकर सब जाती हैं ; गौतमी रह जाती है )

दोनों सखियाँ—( शकुन्तला के पास जाकर ) सखी, तेरा स्नान मंगलकारी हो !

शकुन्तला—सखियो, भली आई ; यहाँ बैठो।

दोनों सखियाँ—( मंगल-पात्र हाथ में लेकर और बैठकर ) सखी, तू तैयार हो जा क्योंकि हमें मांगलिक उबटन करना है।

शकुन्तला—इसे भी मैं बहुत करके मानूँगी क्योंकि मुझे तुम्हारे हाथ से फिर सिंगार कराना दुर्लभ हो जायगा। ( आँसू गेरती है )

दोनों सखियाँ—सखी, ऐसे मंगल समय रोना उचित नहीं है।

( आँसू पोंछ कर सिंगार करती हैं )

प्रियंवदा—सखी तेरा रूप गहनों के योग्य है। आश्रम में मिले अलंकारों से इसकी शोभा फीकी पड़ी जाती है।

तत इति। जवनिकायां अपसारितायां आसनस्था शकुन्तला दर्शकानां दृग्गोचरी भूता।

जात इति। स्वामिना कृतस्य( बहुश्चासौ मानःतस्य ) आदरस्य सूचकं महादेवी शब्दं महादेवी इति संज्ञांलभस्व। भर्त्रा आदृता तस्य महिषी भव।

वत्स इति । वीरं प्रसूते इति वीरप्रसविनी वीरसूः भव। वत्सइति। भर्तुः प्रिया भव।

सखीति। तव मज्जनं सुखकरं भवतु।

स्वागतमिति। सुखेन आगतं स्वागतं। मम सन्निधौ उपविशतम्।

हलेति। हला सखि, सन्नद्धाभव यावत्कालं अभिव्याप्य आवां तव ( मंगलं च तत्समालंभनं ) मंगलानुलेपनं विरचयावः।

इदमिति । इदं सखीभ्यां प्रसाधनं मम आदरणीयम् । दूरवर्त्तिन्यां मयि सखीभ्यां वेशरचनं दुर्लभं भविष्यति । प्रसाधयतः वेशं रचयतः ।

प्रियमिति । अलंकाराणां योग्यं रूपं सौन्दर्यं आश्रमे तपोवने सुलभैः अनायासेनलभ्यैः पुष्पादीनां अलंकारैः दूष्यते ।

हला—नाट्योक्त्या सख्याह्वानेः—

समानाभिस्तथासख्यो हलाभाष्याः परस्परम् । भरतः ।

( प्रविश्योपायनहस्तौ )

ऋषिकुमारकौ—इदमलंकरणम् । अलंक्रियतामत्रभवती[1] ।

( सर्वा विलोक्य विस्मिताः )

गौतमी—वच्छ णारअ,[2] कुदो एदं [ वत्स, नारद कुत एतत् ]

प्रथमः—तातकाश्यपप्रभावात् । ]

गौतमी—किं माणसी सिद्धी [ किं मानसी सिद्धिः ]

द्वितीयः—न खलु[3] । श्रूयताम्(a) । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः(b) कुसुमान्याहरतेति । तत इदानीं ।

क्षौमं(c) केनाचिदिन्दुपाण्डु(d) तरुणा माङ्गल्य(e)माविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो[4] लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः(f) ॥ ४ ॥

---

(a) श्रु श्रवणे—शृणोति । अशृणोत् । अश्रौषीत् । शुश्राव । श्रुतः । श्रोतुम् । (b) वनस्य पतिः ; नि० सुट् । (c) क्षु+मन् ; प्रज्ञा० स्वार्थे अण् । (d) उन्द+उ ; उणा० । उनत्ति अमृतरसेन सर्वामपि भुवं क्लिन्नां करोति । उन्दी क्लेदने । उन्देरिचादेश इति उः । (e) मंगलाय हितं ष्यञ् । (f) प्रतिरूपं द्वंद्वं प्रा० स० ; प्रतिद्वन्द्व मस्त्यस्य ; इनि ।

१—अत्रभवती शकुन्तला । २—णारअ, हारीद । ३—न खलु न खलु । ४ सुभगो ।

(Entering with presents in their hands.)

Two young hermits—Here are ornaments. Let the respected lady be decorated.

(All are astonished to see them.)

Gautami—Child Narad, whence are these?

First hermit—By the power of father Kanva.

Gautami—Creation of his mind?

Second hermit—Certainly not; listen. The venerable sage ordered us to gather flowers for Shakuntala from the trees and then—

Some tree put forth moon-white and auspicious rich garment; another gave out the juice of lac, fit for dyeing the feet; by others were presented ornaments through the hands of wood-nymphs, which (hands)—vieing with the sprouts of those trees—were extended as far as the wrist.

(उपहार लेकर आते हैं)

दो ऋषिकुमार—ये अलंकार हैं। इनसे भगवती का सिंगार करो।

(सब देखकर चकित होती हैं)

गौतमी—बेटा नारद ये कहाँ से आये?

पहला ऋषिकुमार—तात कश्यप के प्रभाव से।

गौतमी—क्या मन में विचारते ही प्राप्त हो गये।

दूसरा ऋषि कुमार—नहीं तो; सुनो; जब महात्मा कश्यप ने हमें आज्ञा दी कि शकुन्तला के लिये वृक्षों से फूल ले आओ तब—

किसी वृक्ष ने चन्द्रमा के समान सफेद बढ़िया मांगलीक वस्त्र दिये ; किसी ने चरणों में महावर लगाने के योग्य लाख का रस दिया ; किन्हीं वृक्षों ने वनदेवियों के हाथ—जो उन्हीं वृक्षों की नई कोंपल के समान थे—पहुँचे तक लंबे करके हमें गहने दिये ।

नेति । नैव मनः कृता सिद्धिः निष्पत्तिः । शकुन्तला हेतोः वृक्षेभ्यः पुष्पाणि आनयत—इति वयं आदिष्टाः । ततः पुष्पाणि आहर्तुं गतेषु अस्मासु—

केनेति । Prose order :—केनचित् तरुणाः इंदुपांडु मांगल्यं क्षौमं आविष्कृतम् ; केनचित् चरणोपभोगसुलभः लाक्षारसः निष्ठ्यूतः ; अन्येभ्यः आपर्वभागोत्थितैः किसलयोद्भेदप्रतिद्वंद्विभिः वनदेवताकरतलैः आभरणानि दत्तानि ।

Paraphrase :—केनचित् वृक्षेण अस्मभ्यं इन्दुः चन्द्रः इव पांडु गौरं मंगलोचितं दुकूलं प्रकाशितम् ; केनचित् वृक्षेण चरणयोः पादयोः उपभोगः उपरंजनं तत्र सुलभः योग्यः अलक्तः उद्गीर्णः ; अन्येभ्यः वृक्षेभ्यः पर्वभागं मर्यादीकृत्य आपर्वभागं मणिबंधपर्यन्तं उत्थितैः उद्गतैः किसलयानां नवपल्लवानां उद्भेदाः उद्भिन्नानि किसलयानि तेषां प्रतिद्वंद्विभिः प्रतिस्पर्धिभिः वनदेवतानां करतलैः भूषणानि अर्पितानि ।

प्रियंवदा—( शकुन्तलां विलोक्य । ) हला, इमाए अब्भुववत्तीए सूइआ दे भत्तुणो गेहे अणुहोदव्वा राअलच्छी । [ हला, अनयाभ्युपपत्त्या सूचिता ते (a)भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मी ।]

---

( a ) " गेह is derived by Bhanuji Dikshita as गेन गणेशेन ईह्यते काम्यते, गो गणेशो गन्धर्वो वा ईह ईप्सितो यस्मिन् वा । But these explanations seem far-fetched. गेह is probably the Prakrata form for गृह afterwards re-Sanskritised." Kale in Mud. Rak. But the following

( शकुन्तला व्रीडां रूपयति । )

प्रथमः—गौतम, पह्येहि । अभिषेकावतीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ।

द्वितीयः—तथा ।

( इति निष्क्रान्तौ । )

सख्यौ—अए, अणुवजुत्तभूसणो[1] अअं जणो । चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेह्म ।

[ अये, अनुपयुक्तभूषणोऽयं जनः । चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं कुर्वः । ]

शकुन्तला—जाणे वो णेउणं । [ जाने वां नैपुणम् । ]

( उभे नाट्येनालंकुरुतः । )

Priyamvada—( looking at Shakuntala ) By this favour is indicated the royal fortune which you will enjoy in your husband's house.

(Shakuntala looks ashamed.)

First hermit—Come, Gautami; let us report the service of the trees to Kanva, who has just gone down for a bath.

Second hermit—Very well.

(Exeunt both.)

Anasuya—We have never worn ornaments. We shall put them in proper places as we have seen in pictures.

---

may be suggested :—गीयते इति गा = गानं ; गा + ईहा ; गानानां ईहा व्यपारः यस्मिन् तद् गेहम् ।

१—अणुवहुत्त; अणभिज्जुत्त ।

Shakuntala—I know your skill.

(Both decorate her.)

प्रियंवदा—( शकुन्तला को देखकर ) वनदेवियों की कृपा से यह सूचित होता है कि तुझे सासरे में राज्यलक्ष्मी प्राप्त होगी।

( शकुन्तला लजाती है )

पहला ऋषिकुमार—गौतम, आओ कश्यप स्नान करने गये हैं। उनसे वनदेवियों के अनुग्रह का हाल कह दें।

दूसरा—अच्छा।

( दोनों जाते हैं )

अनसूया—हमने गहने तो कभी पहने नहीं हैं पर जैसे हमने तसवीरों में देखे हैं उसी तरह पहनाएँ देती हैं।

शकुन्तला—मैं तुम्हारी चतुराई जानती हूँ।

( दोनों सिंगार करती हैं )

हलेति। अनया आभरणदानरूपया अभ्युपपत्त्या वनस्पतीनां अनुग्रहेण पत्युः गेहे भोक्तव्या राजश्रीः सूचिता।

गौतमेत्ति। स्नानार्थं नदीतीरं गताय काश्यपाय तरूणां आभरणदानरूपं उपकारं सूचयावः।

अय इति। अये इति संभ्रमे। अनुपयुक्तानि अधृतानि भूषणानि येन तादृशः युष्मद्विधो जनः। तथापि यथा आभरणानि चित्रितानां स्त्रीणां शरीरेषु दृष्टानि तथा तेषां यथास्थाननिवेशनं कुर्वः। नैपुणं चातुर्यम्।

( ततः प्रविशति स्नानोत्तीर्णः काश्यपः। )

काश्यपः—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्ति[a]कलुषश्चिन्ताजडं दर्शनम्[b] !
वैक्लव्यं मम तावदीदृशमिदं[1] स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु[2] तनयाविश्लेषदुःखैर्नवैः ॥ ५ ॥

( इति परिक्रामति । )

(Enters Kanva who has retired from his bath).

Kanva—As Shakuntala will go today, my heart is overwhelmed with anxiety ; my voice is indistinct on account of suppressing the flow of tears ; my faculty of perception is paralysed on account of sorrowful thought ; if such is the grief, through affection, of me—a recluse—how much more must the house-holders be afflicted by the first pangs of separation from their daughters. (Walks round.)

( स्नान करके कण्व आते हैं )

कण्व—आज शकुन्तला जायगी, इससे मेरे हृदय में बड़ा उद्वेग है; आँसुओं का प्रवाह रोकने के कारण स्वर गद्गद हो गया है; चिन्ता के कारण इन्द्रियों का ज्ञान जाता रहा है, जब मुझ सरीखे वन-वासी को भी स्नेह के कारण इतनी अधीरता है फिर बेटी के पहले वियोग के दुःख से गृहस्थियों की क्या दशा होती होगी।

( इधर उधर टहलते हैं )

---

( *a* ) कल + उषच्; उपा० । ( *b* ) दृश् + ल्युट् ।

१—इदं—अहो ; अपि । २—न ।

तत इति । स्नानात् तीरं प्राप्तः काश्यपः प्रविशति ।

यास्यतीति । Prose Order:—अद्य शकुन्तला यास्यति इति हृदयं उत्कंठया संस्पृष्टम्; कण्ठः स्तंभितवाष्पवृत्तिकलुषः; दर्शनं चिन्ताजडं; अरण्यौकसः मम तावत् स्नेहात् ईदृशं वैक्लव्यं; अहो ! गृहिणः नवैः तनयाविश्लेषदुःखैः कथं नु पीड्यन्ते ।

Paraphrase :—अद्य शकुन्तला पति गृहं गमिष्यति इति हेतोः मम मनः उद्वेगेन आक्रान्तम्; स्वरः स्तंभितया निरुद्धया वाष्पाणां अश्रूणां वृत्या प्रसरेण कलुषः विकृतः अस्पष्टश्च जातः; दर्शनं तत्तदिन्द्रियजं ज्ञानं शकुन्तलागमनचिन्तया मंथरं विषयग्रहणा समर्थं; अरण्यं ओको यस्य तस्य वनवासिनः मम शकुन्तला वात्सल्यात् एवं विधं वैक्लव्यं कातरता ; अहो इति आश्चर्ये; गृहस्थाः प्रथमाविर्भूतैः तनयाभ्यः दुहितृभ्यः विश्लेषः वियोगः तस्य दुःखैः कीदृशं क्लिश्यन्ते ।

कण्ठ—Voice ; *Cf.*

सा मुक्तकंठं सनव्यातिभाराच्चक्रन्द—Raghu.

किंदिमं किन्नरकण्ठि सुप्यते—Ibid.

आर्यपुत्रोऽपि प्रमुक्तकण्ठं रोदिति—Uttara.

सख्यौ—हला सउन्दले, अवसिदमण्डणासि । परिधेहि संपदं खोमजुअलं । [ हला शकुन्तले, अवसितमण्डनासि । परिधत्स्व सांप्रतं क्षौमयुगलम् । ]

( शकुन्तलोत्थाय परिधत्ते । )

गौतमी—जादे, एसो दे आणन्दपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्जस्स । [ जाते, एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व । ]

शकुन्तला—( सव्रीडम् । ) ताद, वन्दामि ।

[ तात, वन्दे[a] । ]

काश्यपः—वत्से,

ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं[b] सेव पूरुमवाप्नुहि ॥ ६ ॥

गौतमी—भअवं, वरो क्खु एसो । ण आसिसा ।

[ भगवन्, वरः खल्वेषः । नाशीः । ]

काश्यपः—वत्से, इतः [1]सद्योहुताग्नीन्[c]प्रदक्षिणीकुरुष्व ।

( सर्वे परिक्रामन्ति । )

Both friends—Dear Shakuntala, your decoration is finished. Now put on the two rich garments.

(Shakuntala rises and puts them on).

Gautami—Child, here comes your father, as if embracing you with an eye, overflowing with joy. Show him respect.

Shakuntala—(modestly) Father, I salute you.

Kashyapa—Daughter, be you highly esteemed of your husband as was Sharmishtha of yayati; get a son who may be an emperor as she got Puru.

Gautami—Revered Sir, this is a boon; not a blessing.

---

( *a* ) वन्द स्तुतौ; वन्दते । ववन्दे । वन्दिता । वन्दिष्यते । अवन्दिष्ट । वन्दितः । वन्दित्वा । वन्दितुम् । ( *b* ) सम् + राजन् + क्विप् । ( *c* ) अङ्ग + नि ( उणा० ) अङ्गयति अग्र्यं जन्म प्रापयति ।

१—सद्योहुताग्नीन्

Kashyapa – Child, this way; go round the sacrificial fires which have just been given oblations.

(All go round).

दोनों सखियाँ—हे शकुन्तला, तेरा सिंगार हो चुका। अब दोनों बढ़िया कपड़े पहन ले।

( शकुन्तला उठकर पहनती है )

गौतमी—बेटी, आनंद बरसाते नेत्रों से मानों तेरा आलिंगन करने गुरुजी आते हैं। तू इनकी वंदना कर।

शकुन्तला—( लज्जा से ) पिता, मैं नमस्कार करती हूँ।

काश्यप—बेटी, जैसे राजा ययाति की रानी होकर शर्मिष्ठा ने आदर पाया वैसे ही तू भी पति से आदर पावेगी और जैसे शर्मिष्ठा ने पुरु को प्राप्त किया उसी तरह तू भी चक्रवर्ती पुत्र प्राप्त करेगी।

गौतमी—हे महात्मा, यह तो आशीर्वाद क्या है वरदान है।

काश्यप—बेटी, इधर आ; इन अग्नियों में अभी आहुति दी गई है; इनकी प्रदक्षिणा कर।

हलेति। अवसितं समाप्तं मंडनं वेशरचना यस्याः तथाभूता। जात। वत्से, आनन्दानुभाविना नेत्रेण त्वां अलिंगन् इव तव पिता आगतः तावत् अवधारणे। गुरुजनोचितं गौरवं अभ्युत्थानवन्दनादिकं दर्शय।

ययातेरिति। Prose Order :—वत्से, शर्मिष्ठा ययातेः इव त्वं भर्तुः बहुमता भव। सा पूरुं इव त्वमपि सम्राजं सुतं अवाप्नुहि।

Paraphrase :—वत्से, ययातेः तन्नामकस्य राज्ञः शर्मिष्ठा वृषपर्वसुता इव त्वं भर्तुर्दुष्यन्तस्य प्रिया भव। सा शर्मिष्ठा पूरुं इव त्वं अपि चक्रवर्तिनं पुत्रं लभस्व।

वत्स इति। अस्यां दिशि। अस्मिन्नेवक्षणे हुतान् अग्नीन् दक्षिणावर्तेन भ्रम।

सम्राट्—येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः।
शास्ति यश्चाज्ञया राज्ञः स सम्राट्—Amarkosha.

पूरु—Puru was the youngest son of Yayati and Sharmishtha. At the request of his father, he transferred his youth to his father. After a thousand years, the father took back his decrepitude and made Puru successor to the throne. Puru was the ancestor of the Kauravas and Pandavas.

वरः खलु etc.

आशीः—वात्सल्याद्यत्र मान्येन कनिष्ठस्याभिधीयते।
इष्टावधारकं वाक्यमाशीः सा परिकीर्तिता।

वरः—तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः।

The former is merely an expression of one's good wishes which may or may not be realised ; the latter is a boon which is more permanent in character and surer of fulfilment ; *Cf.* :—

आशिषो गुरुजनवितीर्णा वरतामापद्यन्ते—Kadambari.

काश्यपः—( ऋक्छन्दसाशास्ते। )

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।
अपघ्नन्तो दुरितं हव्यगन्धै-
*a*वैतानास्त्वां वन्हयः[1] पावयन्तु ॥ ७ ॥

---

( *a* ) वितायन्ते अग्नयो यस्मिन्; वि + तन ( आधारे ) + घञ्; वितान + अण्।

१—अग्नयः।

प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् । ) क्व ते शार्ङ्गरवमिश्राः ।

[ प्रविश्य ]

शिष्यः—भगवन्, इमे स्मः ।

काश्यपः—भगिन्यास्ते मार्गमादेशय ।

शार्ङ्गरवः—इत इतो भवती ।

( सर्वे परिक्रामन्ति )

Kashyapa—(utters benediction in the metre of Rigveda.)

May these sacrificial fires, to whom places have been assigned round the altar, which are provided with fuel, on the borders of which *Kusa* grass has been strewn, which destroy sin by the fragrance of oblations, purify you. Now you may start; (looking about) where are Sharangrava and others?

Pupil—(entering) here are we, Revered Sir.

Kashyapa—Show the way to your sister.

Sharangrava—This way please. (All walk round).

काश्यप—( वैदिकछंद के द्वारा आशीर्वाद देते हैं )

ये यज्ञ की अग्नियां, जो वेदी के चारों ओर स्थित हैं, जिनमें समिधा पड़ी है, जिनके आस पास कुशा डाल दी गई है, जो हव्य की सुगंध से पापों का नाश करती हैं तुझे पवित्र करें ।

अब तू बिदा हो । ( चारों ओर देखकर ) शार्ङ्गरव आदि कहां हैं ?

शिष्य—( प्रवेश करके ) भगवन्, हम ये हैं ।

कराव—अपनी बहन को मार्ग बताओ ।

शार्ङ्गरव—आओ भगवती, इधर आओ । ( सब चलते हैं )

ऋगिति । वैदिकच्छन्दोनिबद्धेन वचनेन आशिषं प्रयुङ्क्ते । अमीति । Prose Order :—वेदिंपरितः क्लृप्तधिष्ण्याः समिद्धन्तः प्रान्तसंस्तीर्णदर्भाः हव्यगंधैः दुरितं अपघ्नन्तः अमी वैतानाः वन्हयः त्वां पावयन्तु ।

Paraphrase :—यज्ञवेदिकां अभितः क्लृप्तानि विहितानि धिष्ण्यानि स्थानानि येषां तथोक्ताः समिधः काष्ठानि विद्यन्ते येषां तथोक्ताः दह्यमानेन्धनाः प्रान्तेषु पार्श्वचतुष्टयेषु संस्तीर्णाः प्रक्षिप्ताः दर्भाः कुशाः येषां तथाभूताः हव्यगंधैः हवनीयद्रव्याणां सौरभैः पापं नाशयन्तः अमी परिदृश्यमानाः वितानस्य यागस्य इमे वैतानः यज्ञ सम्बन्धिनः संस्कृताग्नयः त्वां शुद्धिं नयन्तु ।

प्रतिष्ठस्व गच्छ । दूष्टेः क्षेपः पारितः पातनं तेन सह ।

## Notes

वैतानाः (वितानः sacrifice)—Cf. वैतानिकेऽग्नौकुर्वीत—Manu.

वितानेष्वप्येवं तव मम च सोमे विधिरभूत्—Veni.
वाञ्छितोत्तमवितानयाजिना—Shishupal.

काश्यपः—भो भोः [a]संनिहितास्तपोवनतरवः,

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु[b] या
नादत्ते[c] प्रिय[d]मण्डनापि भवतां स्नेहेन या पल्लवम् ।

(*a*) सम् + नि + धा + क्त । (*b*) नविद्यते पीतं पानं एषां ते अपीताः । अर्श आदिभ्य : अच्—अर्शस् इत्यादिभ्यः मत्वर्थे अच् स्यात् यथा अर्शांसि सन्ति अस्य इति अर्शसः; तथा अत्रापि । (*c*) आङोदोऽनास्य विहरणे—इत्यात्मनेपदम् । (*d*) प्री + क ; इगुपधज्ञा० ।

[a]आद्ये वः कुसुमप्रसूतिसमये यस्या [b]भवत्युत्सवः[c]
सेयं याति[d] शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ८ ॥

Kashyapa—O you—neighbouring trees of the hermitage.

She who never wants to drink water first when you are not watered; who, though fond of decoration, never plucks a leaf on account of affection for you; who makes a festival at the time of the first appearance of your bloom;—that very Shakuntala goes to the house of her husband. Let her be permitted by you all.

कराव—हे तपोवन के समीपवर्ती वृक्षो,

जो शकुन्तला तुम्हें सींचने के पहले जल पीना नहीं चाहती है, सिंगार की शौकीन होने पर भी जो प्रीति के कारण तुम्हारा पत्ता नहीं तोड़ती है, जब पहले पहल तुम फूलते हो तब जो बड़ा उत्सव मनाती है वही आज सुसराल जाती है। तुम सब इसे जाने की अनुमति दो।

भो इति। सन्निहिताः समीपवर्तिनः

पातुमिति Prose Order :—युष्मासु अपीतेषु या प्रथमं जलं पातुं न व्यवस्यति; प्रियमण्डना अपि या स्नेहेन भवतां पल्लवं न आदत्ते; यस्याः वः आद्ये कुसुमप्रसूतिसमये उत्सवः भवति सा इयं शकुन्तला पतिगृहं याति; सर्वैः अनुज्ञायताम्।

---

(*a*) आदि + यत्; आदौभवः; दिगादिभ्यो यत्। (*b*) भू सत्तायाम्; भवति। अभूत्। बभूव। (*c*) उद्+सू+अप्। (*d*) या गतौ; याति। अयासीत्। ययौ।

Paraphrase :—युष्मासु असिक्तेषु या शकुन्तला प्राक् एव जलं पातुं न इच्छति; या प्रियं प्रीतिकरं मंडनं भूषणं यस्या तथा भूता अपि प्रीत्या भवतां किसलयं मण्डनार्थं न गृह्णाति ; यस्याः शकुन्तलायाः युष्माकं प्रथमे कुसुमानां पुष्पाणां प्रसूतिः उद्गमः तस्याः समये काले आनन्दः भवति सा इयं शकुन्तला भर्तृभवनं गच्छति अतः युष्माभिः सर्वैः अनुमन्यताम्।

( कोकिलरवं सूचयित्वा )

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरीदृशम् ॥ ९ ॥

(Acting as if he heard the note of a cuckoo.) Here is Shakuntala's departure permitted by the trees—her companions during her residence in the forest --for so sweet a note of the cuckoo has been adopted by them as a means to express their approval.

( कोयल का बोल जताकर )

वनवास के सहचारी वृक्षों ने शकुन्तला को सुसराल जाने की आज्ञा दे दी क्योंकि उन्होंने कोयल की ऐसी मधुर कूक से अपना उत्तर दिया ।

सूचयित्वा कोकिलशब्दं श्रुतं इत्यभिनीय ।

अनुगतेति Prose order :—इयं शकुन्तला वनवासबंधुभिः तरुभिः अनुमतगमना ; यथा एभिः ईदृशं कलं परभृतविरुतं प्रवचनीकृतम् ।

Paraphrase :—इयं प्रस्थातुकामा शकुन्तला वनवासस्य बंधुभिः सहचरैः वृक्षैः अनुमतं गमनं यस्याः तथाभूता जाता पतिगृहगमनाय अनुज्ञाता। कथं इत्याह—यतः एभिः वृक्षैः ईदृशं मधुरं परैः भ्रियते इति परभृतः कोकिलः तस्य विरुतं कूजितं प्रत्युत्तरीकृतम्।

परभृतः—So called because the female कोकिल lays her eggs in the nests of other birds, and they unknowingly hatch them ; *Cf.*-

प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति

( आकाशे । )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः[1] ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च[a] शिवश्च पन्थाः ॥ १० ॥

( सर्वे सविस्मयमाकर्णयन्ति । )

(In the air.)

May the path be pleasant to her by having, at intervals, lakes green with lotus-beds; the heat of sun's rays be moderated by shady trees; the dust be soft like the pollen of a lotus and the breeze gentle and favourable.

(All listen with astonishment).

---

(*a*) पू+युच्।

१—पातः।

( आकाश में )

इसे मार्ग सुखकारी हो; जगह जगह हरी कमलिनियों से छाये तालाब आवें; धूप मेटने वाले घने घने वृक्ष मिलें; कमल की पराग के समान कोमल धूल बिछी हो; और मन्द तथा अनुकूल वायु चले।

( सब अचंभे से सुनते हैं )

रम्येति—Prose Order:—कमलिनी हरितैः सरोभिः रम्यान्तरः छायाद्रुमैः नियमितार्कमरीचितापः अस्याः पन्था कुशेशयरजोमृदुरेणुः शान्तानुकूलपवनश्च शिवश्च भूयात्।

Paraphrase:—कमलिनीभिः पद्मिनीभिः हरितैः श्यामलैः कासारैः रम्यं मनोज्ञं अन्तरं मध्यं यस्य तथाभूतः छायाद्रुमैः (छाया प्रधानैः द्रुमैः) छायावद्भिः वृक्षैः नियमितः निवारितः अर्कमरीचीनां सूर्यमयूखानां तापः यत्र तथाभूतः अस्याः शकुन्तलायाः प्रस्थानमार्गः कुशेशयानां कमलानां रजांसि परागाः तद्वत् मृदवः कोमला रेणवः पांशवः यस्य तथाभूतः शान्तः मन्दः अनुकूलः सहयायी च पवनः वायुः यस्मिन् तथाभूतः शिवः कल्याणकरः च भूयात्।

## Note

आकाश:—दूरस्थ भाषणं यत्स्यादशरीरनिवेदनं।
परोक्षान्तरितं वाक्यं तदाकाशे निगद्यते॥ भरतः

गौतमी—जादे, णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं। पणम भअवदीणं [ जाते, ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः। प्रणम भगवतीः ]

शकुन्तला—( सप्रणामं परिक्रम्य। जनान्तिकम्। ) हला पिअंवदे, णं अज्जउत्तदंसणुस्सुआए वि [1]असमपदं परिच्चअन्तीए दुक्खेण[2] मे

---

१—असमं। २—दुक्खदुक्खेण।

चलणा पुरदो पवट्टन्ति [ हला प्रियंवदे नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते । ]

प्रियंवदा—ण केअलं तवोवणविरहकादरा सही एव्व । तुए उवट्ठिदविओअस्स तवोवणस्स वि दाव समवत्था दीसइ ।

उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा मोरा
ओसरिअपण्डुपत्ता मुअन्ति अस्सू विअ लदाओ ॥

(न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते ।

उद्गलितदर्भकवला मृगाः परित्यक्तनर्तना मयूराः*a* अपसृतपाण्डु*b*पत्रा मुञ्चन्त्यश्रूणीव लताः ॥ ]

Gautami—Daughter, the nymphs of the wood are dear to you as your kinsfolk. They have permitted you to go. Bow to them.

(Bowing respectfully and walking)

Shakuntala—(aside) Dear Priyamvada, though I am eager to see my husband, my steps move with difficulty in quitting the hermitage.

Priyamvada—Friend, not only are you nervous at quitting the hermitage; look at the similar condition of the hermitage at the time of separation from you.

The deer have dropped their mouthfuls of Kusa grass, the peacocks have given up dancing and the creepers appear to shed tears as they throw off their faded leaves.

---

(*a*) मी + ऊरन् । ( *b* ) पडि+कु; नि० दीर्घः ।

गौतमी—हे बेटी, बंधुजनों की तरह स्नेह करने वाली वन देवियाँ तुझे जाने की आज्ञा देती हैं। इन भगवतियों को प्रणाम कर।

( प्रणाम करके इधर उधर टहल कर )

शकुन्तला—( सखी से ) हे प्रियंवदा, आर्यपुत्र से मिलने का तो मुझे बड़ा चाव है पर आश्रम को छोड़ते हुए बड़ी कठिनाई से मेरे पैर आगे पड़ते हैं।

प्रियंवदा—सखी अकेली तू ही तपोवन के वियोग से अधीर नहीं है। तेरा वियोग पास आजाने से तपोवन की भी तेरी सी ही दशा हो गई है; उसे तो देख—

हिरनों के मुख में से कुशाओं के ग्रास गिर पड़े हैं; मोरों ने नाचना छोड़ दिया है और लताएँ पके पत्ते इस तरह गिराती हैं मानों आंसू डालती हों।

जात इति। ज्ञातिजन इव बंधुवर्ग इव स्निग्धाभिः स्नेहपूर्णाभिः तपोवनदेवताभिः अनुज्ञातं अनुमोदितं गमनं यस्याः तथाभूता असि।

हलेति। ननु अवधारणे। आर्यपुत्रस्य पत्युर्दर्शने अवलोकने उत्सुकायाः उत्कंठितायाः अपि तपोवन स्थानं परित्यजन्त्या मम चरणौ कष्टेन अग्रतः गच्छतः।

नेति। तपोवनात् विरहः तेन आश्रमवियोगेन उद्वेगवती न केवलं भवती एव किन्तु तव आसन्नविरहस्य आश्रमस्य अपि समानां दशां अवलोकय। तावत् अवधारणे।

उद्गलितेति। Prose order :—मृगाः उद्गलितदर्भकवलाः मयूराः परित्यक्तनर्तनाः; लताः अपसृतपाण्डुपत्राः अश्रूणि मुंचंति इव।

Paraphrase :—मृगाः उद्गलिताः मुखेभ्यो विनिर्गता दर्भकवलाः कुशग्रासा येषां तथाभूताः; मयूराः परित्यक्तं परिहृतं

नर्तनं नृत्यं यैः तथाभूताः; लताः व्रतत्यः अपसृतानि गलितानि पाण्डूनि परिणतानि पत्राणि पर्णानि याभ्यः तथाभूताः सत्यः अश्रूणि नेत्रजलानि मुंचन्ति पातयन्ति इव।

## Note

आर्यपुत्र—the son of father-in-law, *i. e.*, a husband.

सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने।

जनान्तिकम्—त्रिपताककरेणान्यानपवार्यान्तरा कथां

अन्योन्या मंत्रणं यत्स्यात्तज्जनान्ते जनान्तिकम् Sahitya.

उद्गलित, etc.—*Cf*. नृत्यं मयूराः कुसुमानि वृक्षा

दर्भानुपात्तान्विजहुर्हरिण्यः।

तस्याः प्रपन्ने समदुःखभाव-

मत्यन्तमासीद्रुदितं वनेऽपि Raghu.

शकुन्तला—( स्मृत्वा ) ताद, लदाबहिणिअं वणजोसिणि दाव आमन्तइस्सं [ तात, लताभगिनीं वनज्योत्स्नां तावदामंत्रयिष्ये ]

काश्यपः—अवैमि ते तस्यां [1]सोदर्यस्नेहम्। इयं तावद्दक्षिणेन।

शकुन्तला—( लतामुपेत्य। ) वणजोसिणि, चूदसंगता वि मं पच्चालिङ्ग इतोगदाहि [2]साहाबाहाहि। अज्जप्पहुदि दूरवत्तिणी[3] भविस्सं। [ वनज्योत्स्ने, चूतसंगतापि मां प्रत्यालिङ्गेतोगताभिः शाखाबाहाभिः। अद्यप्रभृति दूरवर्तिनी भविष्यामि।

Shakuntala—(remembering). Father, I shall bid farewell to my creeper-sister Vanajyotsna.

---

१—सोदर्यास्नेहम्। २—इतोगदाहिं साहाबाहाहिं—इदोगतेहि साहाबाहुहिं; इदोगताहिं साहाबाहुएहिं; इदोगताहिं साहाबाहुहिं। ३—दूर परिवत्तिणी; दूरपरिवाट्टिणीदेक्खु; दूर परिवट्टिणीक्खु; दूर वट्टिणीदेक्खु; दूरपरिवट्टिणी दे।

Kanva—I know your sisterly affection for it. Here is it to the right.

(Approaching the creeper.)

Shakuntala—Vanajyotsna, though you are united with the mango-tree, you may embrace me with your armlike branches, running in this direction. I shall be at a distance from you from today.

शकुन्तला—( सुध करके ) पिता, मैं इस वनज्योत्स्ना से भी मिल लूँ क्योंकि इसमें मेरा बहन का सा स्नेह है।

कराव—मैं भी जानता हूँ कि तेरा इसमें सहोदर का सा प्यार है। यह इधर है—दक्षिण की ओर।

शकुन्तला—( लता के पास जा कर ) हे वनज्योत्स्ना, यद्यपि तू आम से लिपट रही है तो भी इन शाखा रूपी बाहुओं से—जो इधर बढ़ रही हैं—मुझसे मिल ले क्योंकि अब मैं तुझसे दूर जा पड़ूँगी।

तातेति। लताभगिनीं लतारूपां भगिनीं ( भगिनीत्वेन स्वीकृतां लतां ) नवमालिकां आलपिष्ये।

अवैमीति। तस्यां वनज्योत्स्नायां तव सोदरेषु स्नेहः ( तत्पु० ) तं जानामि। यथा भगिन्यां तथैव वनज्योत्स्नायां त्वं स्नेहवती।

वनेति। चूतेन आम्रेण संगता मिलिता अपि इतो गताभिः लंबिताभिः शाखा बाहाभिः शाखारूपैः भुजैः ( बाहो बाहुरपि स्मृत इत्युक्तत्वात् ) मां प्रत्यालिंग।

कश्यपः—

संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम्।

चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ १२ ॥

इतः पन्थानं प्रतिपद्यस्व ।

Kanva—By your merits you have been united with a suitable husband as I already contemplated for you before. This young jasmine has been united with a mongo-tree. Now I have no anxiety for you both.

Proceed on your way hence.

कण्व—जैसा तेरे लिये मैंने पहले ही विचार रक्खा था वैसा ही अनुरूप पति तू ने अपने पुण्यों से पा लिया और इस चमेली को आम का वृक्ष मिल गया । अब तुम दोनों से मैं निश्चिन्त हुआ ।

यहाँ से रास्ते की ओर आगे बढ़ ।

संकल्पितमिति । Prose Order :—मया तवार्थे प्रथमं संकल्पितं एव त्वं सुकृतैः आत्मसदृशं भर्तारं गता । इयं नव-मालिका चूतेन संश्रितवती । संप्रति अहं अस्यां त्वयि च वीत चिन्तः ।

Paraphrase :—मया त्वन्निमित्तं पूर्वं मनसा अभी-प्सितं एव आत्मनः सदृशं अनुरूपं पतिं त्वं निजपुण्यैः प्राप्ता । इयं वनज्योत्स्ना आम्रेण मिलिता । इदानीं अहं नवमालिकायां त्वयि च वीता विगता चिन्ता यस्य तथाविधः जातः ।

इतः मार्गं अवलंबस्व ।

शकुन्तला—( सख्यौ प्रति । ) हला, एसा दुवेणं वो हत्थे णिक्खेवो। [ हला, एषा द्वयोर्युवयोर्हस्ते निक्षेपः(a) । ]

सख्यौ—अअं जणो कस्स हत्थे समप्पिदो। [ अयं जनः कस्य हस्ते समर्पितः। ] ( इति बाष्पं विसृजतः। )

काश्यपः—अनसूये, अलं रुदित्वा। ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला।

( सर्वे परिक्रामन्ति । )

शकुन्तलाः—ताद, एसा उडजपज्जन्तचारिणी गब्भमन्थरा मअवहू जदा अणघप्पसवा होइ तदा मे कंपि पिअणिवेदइत्तअं विसज्जेहि ।

[ तात, एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितारं विसृज। ]

काश्यपः—नेदं[1] विस्मरिष्यामः।

शकुन्तला—( गतिभङ्गं रूपयित्वा । ) को णु क्खु एसो णिवसणे[2] मे सज्जइ। [ को नु खलु एष निवसने मे सज्जते ] ( इति परावर्तते । )

Shakuntala—(to her friends). Friends I leave this creeper as a trust in your hands.

Friends—In whose hands do you commit us ?

(Shed tears.)

Kanva—Anasuya, don't weep. Shakuntala ought to be consoled by you.

(All walk round.)

---

(a) नि + क्षिप् क्षेपणे निधाने च; क्षिपति—क्षिपते। अक्षिपत्—अक्षिपत। अक्षैप्सीत्—अक्षिप्त । चिक्षेप—चिक्षिपे ।

१—वत्से, नेदम् । २—णिवसणं मे कढिजइ ।

Shakuntala—Father, when this doe, roaming near the hermitage and slow on account of fœtus, is delivered without any suffering, please send some one to me to convey the happy news.

Kanva—We shall not forget it.

Shakuntala—(acting obstruction in motion) who pulls my cloth again and again ?

शकुन्तला—( दोनों सखियों से ) हे सखियो, इस लता को मैं तुम्हारे हाथ सौंपती हूँ। दोनों सखियां—और हमें किसके हाथ सौंपती है ? (आँसू गिराती हैं )

कराव—अनसूया, रोना बंद करो । तुम्हें तो शकुन्तला को धीरज बँधाना चाहिये । ( सब चलते हैं )

शकुन्तला—जब यह कुटी के पास फिरने वाली ग्याभन हिरनी कुशलपूर्वक बच्चा जने तब यह मंगल-समाचार मुझसे कहने किसी को भेज देना ।

कराव—अच्छा, हम न भूलेंगे ।

शकुन्तला—( चलते में रुक कर ) यह कौन है जो बार बार मेरा अंचल पकड़ता है ?

हलेति । निक्षेपः न्यासः ।

अनसूयेति । रोदनं माकुरु । ननु अनुनये ।

तात इति । इयं उटजस्य पर्णशालायाः पर्यन्तेषु प्रान्तभूमिषु चरितुं शीलं यस्याः तथोक्ता गर्भेण मंथरा अलसा मृगवधूः यदा अनघः निर्विघ्नः प्रसवः यस्याः तथाभूता भवति तदा मम सन्निधौ कं अपि प्रियस्य शिशुजन्मवृत्तांतस्य निवेदयितारं वार्तावहं प्रेषय ।

गतीति । गतेः गमनस्य भंगं स्खलनं अभिनीय । कः इति वितर्के । नु प्रश्ने । खलु अवधारणे । एष पुनः पुनः अपि मम वस्त्रे लगति ।

## Note

जनः—An individual, whether male or female. It is used by the speaker, instead of the first personal pronoun, to speak of himself in the third person. *Cf.*

अयंजनः प्रष्टुमनास्तपोधने—Kumar.
भगवन्परवानयंजनः प्रतिकूलाचरितं क्षमस्व मे—Raghu.
क्व वयं क्व परोक्षमन्मथो मृगशावैः सममेधितोजनः—Shaku.
तत्तस्य किमपि द्रव्यं योहि यस्य प्रियो जनः—Uttra.
काश्यपः—वत्से,

यस्य त्वया [1]व्रणविरोपण[a]मिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १३ ॥

Kanva—My daughter.

The same fawn on whose mouth you applied the sore-healing oil of *Ingudi* (Terminalia Catappa), when it was pricked by the points of the Kusa grass, and whom you tenderly brought up with handfuls of shyamak grains,—that adopted child of yours—could not forsake your path.

कण्व—बेटी, जिसका मुँह दाभ की नोंक से चिरा देखकर घाव पुरने के लिये तू हिंगोट का तेल लगाती थी, जिसे तूने समा के

---

(*a*) वि+रुह्+णिच्+ल्युट् करणे।
१—व्रणविरोहणम्।

चांवल खिला खिला कर पाला है और अपने बेटे की तरह रक्खा है वह हिरन तेरा रास्ता नहीं छोड़ता।

यस्येति। Prose Order :—त्वया यस्य कुशसूचिविद्धे मुखे व्रणविरोपणं इंगुदीनां तैलं न्यषिच्यत सः अयं श्यामाक मुष्टिपरिवर्द्धितकः पुत्रकृतकः मृगः ते पदवीं न जहाति।

Paraphrase ;—त्वया यस्य मृगस्य कुशानां दर्भाणां सूचिभिः तीक्ष्णाग्रैः विद्धे क्षते वदने क्षतशोषकं इंगुदीनां तापसतरूणां तैलं सिक्तं सः अयं श्यामाकानां धान्यविशेषाणां मुष्टिभिः ग्रासैः परिवर्द्धितकः पोषितः पुत्रकृतकः पुत्रत्वेन स्वीकृतः हरिणः तव पंथानंन मुंचति।

शकुन्तला:—वच्छ, किं सहवासपरिच्चाइणिं मं अणुसरसि। अचिरप्पसूदाए जणणीए विणा विड्ढिदो१ एव्व। दाणिं पि मए विरहिदं तुमं तादो चिन्तइस्सदि। णिवत्तेहि दाव। (इति रुदती प्रस्थिता।)

[ वत्स, किं सहवासपरित्यागिनीं मामनुसरसि अचिरप्रसूतया$a$ जनन्या विना वर्धित एव। इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति। निवर्तयस्व तावत्। ]

Shakuntala—Child, why do you follow me when I am leaving all my companions? You were brought up by me when you were bereft of your mother just after delivery; now on being separated from me, you will be taken care of by my father. Do go back. (Goes away weeping.)

शकुन्तला—अरे बच्चे, तू मेरे पीछे क्यों आता है? मैं तो अपने सब संगी साथियों को छोड़ रही हूँ। तेरी मा पैदा होते ही तुझे

---

($a$)—सू प्रसवे; सूते। असूत। असोष्ट-असविष्ट। सुषुवे। सूतिः। सूतः।
१—विवड्ढिदो।

छोड़ मरी तब मैंने ही तेरा पालन किया। अब मैं चली जाऊँगी तब पिता तेरी चिन्ता करेंगे। तू लौट जा!

(आंसू डालती हुई चलती है)

वत्सेति। किं सहवासं एकत्रवासं परित्यजतीति तथाभूता तां मां अनुगच्छसि। अहं तु सर्वेषां सहचारिणां संगतिं त्यजामि। अतः अनुगमनं नोचितम्। अचिरं सद्यः प्रसूतया प्रसवानन्तरमेव मृतया मात्रा विना मयैव वर्द्धितः।

चिन्तयिष्यति from चित् = To take care of; *Cf.* त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना—Raghu.

काश्यपः—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
वाष्पं कुरु स्थिरतया [1]विरतानुबन्धम्।
अस्मिन्नलक्षितनतोन्नतभूमिभागे[2]
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १४ ॥

Kanva—With firmness stop the flow of tears which hinder the action of your eyes with upturned eyelashes; because in this path, where you cannot mark the high and low portions of the ground, your footsteps fall uneven.

कण्व—धीरज बांध कर आँसुओं के प्रवाह को रोक; ये तेरी उठी हुई बरनियों वाली आँखों को देखने नहीं देते। यहां भूमि नीची है इससे रास्ते में तेरे पैर ऊँचे नीचे पड़ते हैं।

---

१—विहतानुबन्धम्। २—भूविभागे।

उत्पक्ष्मणोरिति । Prose order :—उत्पक्ष्मणोः नयनयोः उपरुद्धवृत्तिं वाष्पं स्थिरतया विरतानुबंधं कुरु ; अलक्षितनतोन्नतभूमि भागे अस्मिन् मार्गे ते पदानि विषमीभवन्ति खलु ।

Paraphrase :—उद्गतानि पक्ष्माणि लोमानि ययोः तादृशयोः नेत्रयोः उपरुद्धा निरुद्धा वृत्तिः व्यापारः येन तथाभूतं । अनेन अश्रुजलस्य अधःपतनं निषिद्धम् । अश्रुजलं धैर्यं अवलम्ब्य विरतः निवृत्तः अनुबंधः प्रवाहः यस्य तथाविधं कुरु । यतः अलक्षितः वाष्पाकुलाभ्यां नेत्राभ्यां अदृष्टः नतः निम्नः उन्नतः उच्चश्च भूप्रदेशः यस्मिन् तादृशे अस्मिन् पथि तव पादनिक्षेपाः स्खलंति । खलु वाक्यालंकारे ।

शार्ङ्गरवः—भगवन्, उदकान्तं[1] स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि[a] ।

काश्यपः—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

( सर्वे परिक्रम्य स्थिताः । )

काश्यपः—( आत्मगतम् । ) किं न खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् । ( इति चिन्तयति[2] । )

शकुन्तला—( जनान्तिकम् । ) हला, पेक्ख । णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमि त्ति[3] ।

---

(a) अर्ह योग्यत्वे ; अर्हति । आर्हत् । आर्हीत् । आनर्ह । अर्हितः । अर्हन् ।

१—ओदकान्तम् ; उदकान्तात् ।

२—एतदनन्तरं क्वचित्—' प्रियंवदा—णसोअत्थि को विजोतए विरहिअत्तोण ताम्मइ । पेक्खिसुदाव । पुडइणि पत्तन्तरिओ वाहरिओ विणवाह मन्थिअ । मणओ तह दिहिं देह चक्कवाओ" अयमंशो दृश्यते ।

३—' त्ति ' इतिक्वचिन्नास्ति ।

[ हला, पश्य*a* नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारौति दुष्करमहं करोमीति । ]

अनसूया—सहि, मा एव्वं मन्तेहि । [ सखि, मैवं मंत्रय । ]

एसा वि विएण विणा गमेइ रअणिं विसाअदीहअरं ।
गुरुअं पि विरहदुक्खं आसाबन्धो सहावेदि ॥ १५ ॥

[ एषापि प्रियेण विना गमयति रजनीं विषा*b*ददीर्घतराम् गुर्वपिविरहदुःखमाशाबन्धः साहयति ॥ ]

Sharangrava—Revered Sir, It is said that a beloved person should be escorted up to water side. Here is the shore of the lake. Will you please deliver your message and return ?

Kanva—Then let us stop under the shade of the fig-tree.

(All go round and stop.)

Kanva—(aside) what appropriate message should be sent by us to His Majesty Dushyanta ?

(Meditates).

Shakuntala—(aside) Friend, just see, the female chakrawak cries bitterly, being distressed at the separation of her mate—concealed by lotus-leaves. But I do what is difficult to be done.

---

(*a*) दृश् चाक्षुषज्ञाने; पश्यति । अपश्यत् । अद्राक्षीत् । ददर्श । द्रष्टुम् । दृष्ट्वा । दर्शनं । दृष्टः (*b*) वि+सद्+घञ् ।

Anasuya—Friend, Do not think so. Even she being separated from her mate, passes the night, appearing longer on account of sorrow. The tie of hope makes the heavy pain of separation endurable.

शार्ङ्गरव—हे महात्मा, सुनते हैं कि प्यारे जनों को जलाशय तक ही पहुँचाने जाना चाहिये। अब यह सरोवर का तट आगया। आप हमें सँदेसा देकर आश्रम को सिधारिये।

कण्व—तो आओ इस बड़ की छाया में ठहर लें।

( सब चल कर ठहरते हैं )

कण्व—( आप ही आप) माननीय दुष्यन्त के योग्य क्या सँदेसा हम भेजें ?

( सोचते हैं )

शकुन्तला—( सखी से धीरे धीरे ) हे सखी, देख—चकवी कमल के पत्तों में छिपे प्यारे चकवे को देखे बिना आतुर होकर विलाप कर रही है। पर मैं कैसा कठिन काम करती हूँ ?

अनसूया—सखी, यों मत कह।

दुःख के कारण लंबी हुई रात को भी यह चकवी पति के बिना अकेली ही काटती है क्योंकि आशा का बंधन बड़े भारी विरह-दुःख को भी सहने के योग्य बना देता है।

भगवन्निति। स्नेहास्पदो जनः उदकस्य जलस्य अन्तः सीमा तं जलाशयपर्यंतं अनुगन्तव्यः। इदं कासारस्य तटम्। अत्र सन्देशं दत्वा प्रतिनिर्वर्तितुं अर्हसि।

तेनेति। तेन हि ( क्षीर प्रधानो वृक्षः ) क्षीरवृक्षः वटवृक्षः तस्य छाया तां।

किमिति । किं तु खलु पूज्यस्य दुष्यन्तस्य योग्यं अस्माभिः संदेशरूपेण प्रेष्यम् ।

हलेति । नलिनी पत्रैः कमल पत्रैः अन्तरितं व्यवहितं अपि सहचरं चक्रवाकं अपश्यन्ती दीना चक्रवाकी करुणं रौति ! सा इयन्तं अपि विरहं सोढुं असमर्था । अहं तु इयत्कालं यावत् पतिं विना स्थिता । एतत् स्त्रीभिः दुष्करम् । सखीति । मा एवं कथय । इदं न दुष्करम् ।

एषेति । Prose order :—एषा अपि प्रियेण विना विषाद-दीर्घतरां रजनीं गमयति । आशाबंधः गुरु अपि विरहदुःखं साहयति ।

Paraphrase :—एषा चक्रवाको अपि प्रियेण चक्रवाकेण विना विषादेन वियोग पीडया दीर्घतरां पूर्वतो दीर्घत्वेन प्रतीयमानां रात्रिं यापयति । आशाबंधः पुनः समागमस्य आशाया बंधनं गुरु महत् अपि विरहदुःखं वियोगपीड़ासहनयोग्यं करोति ।

## Notes

अर्हं represents a polite request ; *Cf.*—
छिन्नाण्यहान्यर्हसि सोढुमर्हन्—Raghu.
नार्हसि मे प्रणयं विहन्तुम्—*Ibid.*
तं सन्तः श्रोतु मर्हन्ति—*Ibid.*
आशाबंधः etc.—*Cf.*
आशाबंधः कुसुमसदृशं प्रायशो ह्यंगनानां
सद्यः पाति प्रणयिहृदयं विप्रयोगे रुणद्धि—Megha.
आशातन्तुर्नच कथयताऽत्यन्तमुच्छेदनीयः
प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः—Malati.
बलवती खलु बल्लभसंगमाशा यत्तथाविधमप्यनुभव—
वेदनाविह्वलितप्राणमतिकृच्छ्रं प्राणयते—Kadambari.

काश्यपः—शार्ङ्गरव, इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

शार्ङ्गरवः—आज्ञापयतु भवान्।

काश्यपः—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।
सामान्यप्रतिपत्ति[a]पूर्वकमियं दारेषु[b] दृश्या त्वया
[1]भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः॥ १९॥

Kanva—Sharangrava, Having introduced Shakuntla, you should speak to him thus on my behalf.

Sharangrava—Let your Holiness give orders.

Kanva—Having considered well that we have penance as our wealth, that your family is high and that the flow of affection of this maiden towards you was not in any way influenced by relatives, she deserves to be esteemed by you with a regard common to all wives. More than this depends on fate and should not be expressed by wife's relatives.

कण्व—हे शार्ङ्गरव, शकुन्तला को आगे करके तू हमारी ओर से उस राजा से यों कहियो।

---

(a) प्रति + पद् + क्तिन्; पद्—पद्यते। अपद्यत। अपादि। पेदे। पन्नः।
(b) दारयति भ्रातॄन्; दृ + णिच् दारि कर्तरि अच्।

1—भाग्याधीनम्।

शार्ङ्गरव—आज्ञा दीजिये।

कण्व—हे राजा, तू हमें तपोधनी और अपने को बड़ा कुलीन जानकर तथा जो प्रीति इसकी तुझ में बिना किसी बांधव के अनुरोध के हुई उसे सोचकर इस लड़की को सब रानियों के समान आदर से रखियो। हमारा इतना ही कहना है। इससे अधिक जो कुछ हो इसके भाग्य के अधीन है—लड़की के बंधुओं के कहने योग्य नहीं है।

शार्ङ्गरवेति। वक्ष्यमाणप्रकारेण त्वया मद्वचनं आश्रित्य स राजा दुष्यन्तः शकुन्तलां अग्रतः कृत्वा वक्तव्यः—

अस्मानिति। Prose Order :—संयमधनान् अस्मान् आत्मनः उच्चैः कुलं च, त्वयि अस्याः कथमपि अबांधवकृतां स्नेह प्रवृत्तिं च साधु विचिन्त्य त्वया इयं दारेषु सामान्यप्रतिपत्तिपूर्वकं दृश्या; अतः परं भाग्यायत्तम्; तत् खलु वधूबंधुभिः न वाच्यम्।

Paraphrase :—संयमः तप एव धनं येषां तथोक्तान् अस्मान् पितृत्वेन सम्बन्धिनः साधु सम्यक् विचिन्त्य, आत्मनः स्वस्य उन्नतं वंशं च विचिन्त्य, त्वयि अस्याः शकुन्तलायाः केनापि प्रकारेण तां त्वया अनुभूतां बांधवैः पितृमात्रादिभिः न कृतां बंधु जनानुरोधं विनैव घटितां स्नेहप्रवृत्तिं अनुरागोदयं साधु विचार्य इयं शकुन्तला राजपत्नीषु साधारणगौरवपूर्वकं त्वया परिगणनीया। अस्मात् अधिकं दैवाधीनम्। तत्खलु बध्वाः बंधुभिःपितृमातृ प्रभृतिभिः न वक्तुमुचितम्।

शार्ङ्गरवः—गृहीतः[1] संदेशः।

काश्यपः—वत्से, त्वमिदानीमनुशासनीयासि। वनौकसोऽपि सन्तो लौकिकज्ञा[a] वयम्।

---

(a) लोके विदितं; लोक + ठञ् । १—सुगृहीतः।

शार्ङ्गरवः—न खलु धीमतां कश्चिद्विषयो नाम ।

काश्यपः—सा त्वमितः पतिकुलं प्राप्य—

शुश्रूषस्व गुरून्कुरु प्रियसखी वृत्तिं[a] सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं[b] गमः ।
भूयिष्ठं[c] भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं [d]गृहिणीपदं युवतयो वामाःकुलास्याधयः

कथं वा गौतमी मन्यते ।

Sharangrava—I have grasped the message.

Kanva—Daughter, now are you to be instructed. Though we live in a forest, we are acquainted with the ways of the world.

Sharangrava—Nothing can possibly be beyond the reach of an intelligent person.

Kanva—On reaching the house of your husband from here, serve your superiors, have the behaviour of a dear friend towards your fellow-wives; even though offended, do not, out of anger, go against your husband; be extremely polite towards attendants and never be puffed up in the time of prosperity; thus young women get the title of matrons; those who act contrary to this, are the banes of their families.

---

(*a*) समानैकपुत्रपिण्डवीरभ्रातृभ्यश्च हे इतिवक्तव्यनिपातनात् पत्युः पत्न्यादेशः । ज्योतिर्जनपदस्येति समानस्य सः । (*b*) प्रतिगता आपोऽत्र; अच् समा० । नि० प्रतिप; पृषो० वा । (*c*) बहु+इष्ठन् । (*d*) गृहं गृहकृत्यं साध्यतयाऽस्त्यस्याः इनि ङीप् ।

How does Gautami think ?

शार्ङ्गरव—यह संदेश मैंने समझ लिया।

कण्व—बेटी, अब तुझे भी शिक्षा देनी है। वनवासी होकर भी हम लौकिक व्यवहार जानते हैं।

शार्ङ्गरव—विद्वानों से क्या छिपा है।

कण्व—बेटी, जब यहाँ से जाकर सुसराल में पहुँचे तब—बड़े बूढ़ों की सेवा करियो; सौतों के साथ प्रिय सखी का सा वर्ताव रखियो; तेरा अपमान किया जाय तो भी गुस्सा होकर पति के प्रतिकूल कुछ मत करियो; नौकर-चाकरों के साथ सरलता से रहियो; संपत्ति के समय गर्व मत करियो। जो युवतियाँ इस प्रकार रहती हैं वे गृहिणी का पद प्राप्त करती हैं और जो इससे उलटा चलती हैं वे अपने कुल को क्लेश देतीं हैं।

अच्छा, गौतमी की क्या राय है ?

वत्स इति। त्वं इदानीं पतिगृहप्रस्थानकाले उपदेष्टव्या असि। वयं वनवासिनः अपि सन्तः तपः प्रभावेण लोकव्यवहाराभिज्ञाः स्मः।

नेति। नैव बुद्धिमतां कश्चित् व्यवहारः अपरिचितः। नाम संभावनायाम्। उक्तं च—

यत्र नास्ति गतिर्वायोः रश्मीनां च विवस्वतः
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा॥

सेति। सा मया उपदिष्टा त्वं तपोवनात् भर्तृभवनं प्राप्य—

शुश्रूषस्वेति। Prose Order :—गुरून् शुश्रूषस्व; सपत्नीजने प्रियसखी वृत्तिं कुरु; विप्रकृताऽपि रोषणतया भर्तुः प्रतीपं मास्म-गमः; परिजने भूयिष्ठं दक्षिणा भव; भाग्येषु अनुत्सेकिनी भव ; एवं युवतयः गृहिणी पदं यान्ति; वामाः कुलस्य आधयः।

Paraphrase :—गुरून् पत्युः गुरुभूतान् सेवस्व; समानःएकः पतिर्यस्याः सा सपत्नी तासां जने समुदाये प्रियसख्याः सौहार्दस्य वृत्तिं व्यवहारं कुरु; भर्त्रा अपमानिता अपि कोपनतया पत्युः प्रतिकूलं मागाः प्रतिकूल वर्तिनी मा भव। भृत्यवर्गे अत्यर्थं सरला भव। संपत्तु गर्वरहिता भव। अनेन प्रकारेण युवतयः गृहिण्याः पदं अधिकारं प्राप्नुवन्ति। विरुद्धाचारवत्यः बध्वः कुलस्य वंशस्य आधयः क्लेशदायका भवन्ति।

कण्वस्तु तपोमहिम्ना लोकव्यवहारं विचार्य शकुन्तलायै उपदेशं दत्तवान्। किन्तु स्त्रीणां विषये स्त्रियः प्रमाणाम्। अतः गौतमी स्वानुभवेन अस्मिन् विषये स्वमतं वक्तुमर्हति। गौतम्या मतस्य महत्त्वद्योतनाय उक्तं कण्वेन कथमिति। मया दत्तः उपदेशः वधूजनोचितो वर्तते न वा—अस्मिन् विषये गौतम्या स्वमतं प्रकटी करणीयम्। वा विकल्पे।

## Notes

अविषय—not within the reach of ; *Cf.*—

सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि भो :—Utter.

सकलवचनानामविषयः—Malati.

गौतमी—एत्तिओ वहूजणस्स उवदेसो। जादे, एदं[1] क्खु सव्वं ओधारेहि। [ एतावान्वधूजनस्योपदेशः। जाते, एतत्खलु सर्वमवधारय। ]

काश्यपः—वत्से, परिष्वजस्व मां सखीजनं च।

शकुन्तला—ताद, इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति। [ तात, इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते। ]

---

१—एदं क्खु—एदं, एदंहि।

काश्यपः—वत्से, इमे अपि प्रदेये। न युक्तमनयोस्तत्र गन्तुम्। त्वया सह गौतमी यास्यति।

शकुन्तला—(पितरमाश्लिष्य।) कहं दाणिं तादस्स अङ्कादो परिब्भट्ठामलअतटोम्मूलिआ चन्दणलदा विअ देसन्तरे जीविअं धारइस्स [ कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये। ]

Gautami—This advice is enough for a bride. Remember it well, my daughter.

Kanva—Embrace me as well as your friends.

Shakuntala—Father, Are Priyamvada and others to return from this very place ?

Kanva—Child, they are also to be given in marriage. It is not proper for them to go there. Gautami will go with you.

Shakuntala—(Embracing her father). How shall I support my life now in a foreign place, being removed from the arms of my father, like a sandal plant, uprooted from the side of the Malaya mountain ?

गौतमी—कुल बधुओं को इतनी ही शिक्षा काफी है। बेटी, इसे ख़ूब ध्यान में रखियो।

कण्व—बेटी, मुझसे और अपनी सखियों से मिल ले।

शकुन्तला—पिता, क्या प्रियंवदा आदि सखियाँ यहीं से लौट जायँगी ?

कण्व—बेटी, इन्हें भी विवाह में देना है। इनका वहाँ जाना उचित नहीं है। तेरे साथ गौतमी जायगी।

शकुन्तला—( कराव से भेट करके ) अब मैं पिता की गोद से जुदी होकर मलयागिरि से उखाड़े हुए चन्दन के पौदे की भांति परदेश में कैसे जीवन धारण करूँगी ?

एतावानिति। बधूजनस्य नवोढस्त्रीजनस्य। अस्मात् अधिकं किमपि उपदेष्टव्यं नास्ति। अवधारय मनसि निधेहि।

तात इति। प्रियंवदा प्रभृतयः सख्यः अस्मात् स्थानात् एव प्रतिगमिष्यन्ति।

कथमिति। केन प्रकारेण इदानीं पितुः क्रोडात् च्युता अहं मलयतटात् उत्पाटिता चंदन लता इव। जीवितं जीवनं।

काश्यपः—वत्से, किमेवं कातरासि।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ १८ ॥

( शकुन्तला पितुः पादयोः पतति )

यदिच्छामि ते तदस्तु।

Kanva—Child, why are you so afraid ? Placed in the respectable position of a wife to a husband of noble birth; occupied every moment with several affairs, important on account of his dignity ; and having soon given birth to a holy son, just as the East does the sun ; you will not, my child, mind the sorrow, caused by separation from me.

( Shakuntala falls at her father's feet. )

May all be realised that I wish for you !

कण्व—बेटी, ऐसी विकल क्यों होती है ?

जब तू बड़े कुलीन पति की गृहिणी के—प्रशंसा के योग्य—पद पर स्थित होगी और समृद्धि के कारण बड़े बड़े कामों में निरन्तर लगी रहेगी तथा थोड़े ही दिनों में पुत्र भी ऐसे जनेगी जैसे पूर्व दिशा सूर्य को जनती है तब तू मुझ से जुदे होने के दुःख की परवा नहीं करेगी।

( शकुन्तला पिता के पैरों में गिरती है )

जो तेरे लिये मैं चाहता हूँ वह सब पूरा हो।

अभिजनेति। Prose Order :—वत्से, अभिजनवतः भर्तुः श्लाघ्ये गृहिणी पदे स्थिता तस्य विभवगुरुभिः कृत्यैः प्रतिक्षणं आकुला अचिरात् प्राची अर्कं इव पावनं तनयं प्रसूय त्वं मम विरहजां शुचं न गणयिष्यसि।

Paraphrase :—हे वत्से, महाकुलीनस्य दुष्यन्तस्य स्पृहणीये महिषीपदे वर्तमाना तस्य पत्युः विभवेन समृद्धया गुरुभिः महद्भिः कार्यैः क्षणे क्षणे व्यस्ता शीघ्रं पूर्वादिक् सूर्यं इव पवित्रं पुत्रं उत्पाद्य त्वं मद्वियोगभवां व्यथां न चिन्तयिष्यति।

त्वदर्थे यन्ममाभीष्टं तत्सर्वं सफलीभवतु। अभीष्टंच " ययातेः" इत्यादिना श्लोकेनोक्तम्।

शकुन्तला—( सख्यावुपेत्य। ) हला, दुवे वि[1] मं समं एव्व परिस्सजह। [ हला, द्वे अपि मां सममेव परिष्वजेथाम्। ]

सख्यौ—( तथा कृत्वा। ) सहि, जइ णाम सो राआ पच्चहिण्णाणमन्थरो भवे तदो से इमं अत्तणामहेअङ्किअं अंगुलीअअं दंसेहि। [ सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयांकितमङ्गुलीयकं दर्शय। ]

---

1—एव्व

शकुन्तला—इमिणा संदेहेण वो आकम्पिद[1] ह्मि । [ अनेन संदेहेन वामाकम्पितास्मि । ]

सख्यौ—मा भाआहि । सिणेहो पावसंकी । [ मा भैषीः । स्नेहः पापशंकी । ]

शार्ङ्गरवः—युगान्तरमारूढः[2] सविता(a) । त्वरतामत्र[3]भवती ।

शकुन्तला—( आश्रमाभिमुखी स्थित्वा ) ताद, कदाणु भूओ तवोवणं पेक्खिस्सं । [ तात, कदा नु भूयस्तपोवनं प्रेक्षिष्ये । ]

काश्यप—श्रूयताम् ।

भूत्वा चिराय चतुरन्तमहीसपत्नी
(b)दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ १९ ॥

Shakuntala—( approaching her friends ) Both you embrace me together.

Friends—( doing so ) Friend, If by chance the King be slow in recognising you, show him this ring with the stamp of his name.

( They give the ring. )

Shakuntala—I am made to shudder by this suspicion of yours.

Friends—Don't be afraid. Affection suspects evil.

Sharangrava—The sun has ascended the second division of the day. You are to make haste.

---

(a) सू+तृच् (b) दुष्यन्तस्य अपत्यं पुमान्; इञ् ।

१—आकम्पिअ ह्मिअं । २—[illegible]धिरूढः । ३—भवती ।

Shakuntala—(standing with her face towards the hermitage) Father, when shall I see the hermitage again ?

Kanva—Listen, Having been for a long time the co-wife of the Earth, bounded on all sides by water, and having settled in marriage the son of Dushyanta, who will be without a rival, your will again enter this tranquil cottage with you husband when he has handed over the burden of the family to his son.

शकुन्तला—( दोनों सखियों के पास जाकर ) आओ दोनों एक साथ ही मुझ से मिल लो ।

दोनों सखियां—( मिल कर ) कदाचित् वह राजा तुझे पह-चानने में आनाकानी करे तो यह मुँदरी, जिस पर उसका नाम खुदा है, दिखा दीजो ।

( मुँदरी देती हैं )

शकुन्तला—तुम्हारे वहम से तो मैं कांप उठी ।

दोनों सखियां—कुछ डर की वात नहीं है । स्नेह में बुरी शंका होती ही है ।

शार्ङ्गरव—अब सूरज दूसरे पहर में आगया । जल्दी करो ।

शकुन्तला—( आश्रम की ओर मुँह करके खड़ी होती है ) पिता, अब मैं फिर तपोवन का दर्शन कब करूँगी ?

कण्व—सुन—

जब तू बहुत दिन तक चारों ओर समुद्र से घिरी हुई पृथ्वी की सपत्नी होकर रह लेगी और अपने—दुष्यन्त से पैदा हुए—शूर वीर पुत्र का विवाह कर लेगी तब तेरा पति कुटुंब का भार उसे सौंप देगा और तू पति के साथ फिर इस शान्ति-पूर्ण आश्रम में आवेगी ।

सखीति । यदि वा ( वा विकल्पे ) स राजा दुष्यन्तः प्रत्यभिज्ञाने इयं कण्व दुहिता शकुन्तला मया पूर्वं गांधर्वविधिना। परिणीता इति परिज्ञाने मन्दः भवेत् ततः तस्य राज्ञः इदं आत्मनः तस्यैव नामधेयेन नाम्ना अंकितं चिन्हितं अंगुलीयकं मुद्रिकां दर्शय।

अनेनेति । युवयोः शंकया भीता स्मि ।

मेति । मा बिभेहि । भीता मा भव । स्नेहः पापं अनिष्टं शंकते इति तथाभूतः । स्नेहास्पदस्य अनिष्टोत्प्रेक्षणं स्नेहस्य कार्यम् ।

युगेति । सूर्यः प्रहरान्तरं प्राप्तः । द्वितीयं प्रहरं प्रविष्टः ।

भूत्वेति । Prose Order :—चिराय चतुरन्त मही सपत्नी भूत्वा अप्रति रथं दौष्यन्तिं तनयं निवेश्य तदर्पित कुटुंब भरेण भर्त्रा सार्द्धं शान्ते अस्मिन् आश्रमे पुनः पदं करिष्यसि ।

Paraphrase :—चिरकाल पर्यन्तं चत्वारः अन्ताः प्रान्तभागा यस्याः तथाभूतायाः समस्तायाः पृथ्व्याः एकभर्तृका भूत्वा नास्ति प्रतिरथः प्रतिपक्षः यस्य तं दुष्यन्तस्याङ्गजं पुत्रं निवेश्य विवाह्य । तान्निवेश्य चतुरोऽपि तत्र सः—इति रघुवंशेऽपि । तस्मिन् पुत्रे अर्पितः न्यस्तः कुटुंबस्य बांधवजनस्य भरः भारः येन तादृशेन पत्या सार्धं शमप्रधाने अस्मिन् तपोवने पुनः वासं करिष्यसि। वार्धक्ये तनये राज्यभारं विन्यस्य भर्त्रा सह अत्रैव त्वया आगन्तव्यम् ।

## Notes.

स्नेहः—etc.

प्रेम पश्यति भयान्यपदेऽपि—Kirata.

गौतमी—जादे, परिहीअदि गमणबेला । णिवत्तेहि पिदरं । अहवा चिरेण वि पुणो[1] पुणो एसा एव्वं मन्त इस्सदि । णिवत्तदु भवं ।

---

[1]—पुणो पुणो—पुणो

[ जाते, परिहीयते गमनवेला। निवर्तय पितरम्। अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते। निवर्ततां भवान्। ]

काश्यपः— वत्से, उपरुध्यते तपोऽनुष्ठानम्।

शकुन्तला—( भूयः पितरमाश्लिष्य। ) तवच्चरणपीडिदं तादसरीरं ता मा अदिमेत्तं मम किदे उक्कण्ठिदु। [ तपश्चरणपीडितं तातशरीरम्। तन्मातिमात्रं मम कृत उत्कण्ठितुम्।)

काश्यपः—(सनिःश्वासम्।)

शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम्। [1]उटजद्वारविरूढं(a) नीवारबलिं विलोकयतः॥

गच्छ। शिवास्ते पन्थानःसन्तु।

( निष्क्रान्ता शकुन्तला सहयायिनश्च। )

Gautami—Child, the time of departure is passing away. Let your father return. Or even for a long time, she will go on speaking like this; let your reverence return.

Kanva—Child, my practice of penance is being obstructed.

Shakuntala—( embracing her father again. ) Your body has been emaciated by the practice of penance. Don't therefore be much grieved on my account.

Kanva—(with a sigh) My child, How will my grief come to an end when I shall see the sacred

---

(a) वि + रुह + क्त; विशेषेण रोहति।

१—उटजद्वारविरूढम्; उटजद्वार.विरूढम्।

offering of *Nivar* grains previously made by you and now sprouting up at the entrance of the cottage?

You may go now; may your path be free from trouble.

( Exeunt Shakuntala and the attendants )

गौतमी—बेटी, अब चलने का मुहूर्त निकला जाता है। पिता को जाने दे। अथवा महात्मा जी, आप जाइये। यह तो देर तक बराबर ऐसे ही कहती रहेगी।

कण्व—बेटी, मेरे तप के अनुष्ठान में विघ्न होता है।

शकुन्तला—( पिता से फिर मिल कर ) पिता, तुम्हारा शरीर तपस्या से दुबला हो गया है इस कारण मेरे लिये बहुत शोक मत करना।

काश्यप—( गहरी सांस लेकर ) बेटी, पहले जो तू नीवार का उपहार दिया करती थी वह पर्णशाला के द्वार पर उग आया है। उसे देख देख कर मेरा शोक कैसे दूर होगा।

अब जा; तेरा मार्ग सुखकारी हो!

( शकुन्तला और उसके साथी जाते हैं )

जात इति। प्रस्थानस्य समयः अतिक्रामति। पितरं आश्रमं गन्तुं कथय। अथवा पक्षान्तरे काश्यपं प्रति आह बहुकाल पर्यन्तं अपि भूयः भूयः एषा अनेन प्रकारेण एव वक्ष्यति। तस्मात् भवान् आश्रमं गच्छतु।

वत्स इति। तपसः आचरणं व्याहन्यते।

तप इति। पितुः वपुः तपोऽनुष्ठानेन कर्शितम्। तस्मात् कारणात् मां उद्दिश्य अत्यर्थं चिन्ता न कार्या।

शममिति ।Prose Order :—त्वया रचितपूर्वं उटजद्वारविरूढं नीवारबलिं विलोकयतः मम शोकः कथं नु शमं एष्यति ।

Paraphrase :—हे वत्से, त्वया पूर्वं रचितं विहितं उटजस्य पर्णशालायाः द्वारे द्वारदेशे विरूढं अङ्कुरितं नीवारमयं पूजोपहारं पश्यतः मम शोकः कथं नु शान्तिं गमिष्यति कथमपि न गमिष्यतीत्यर्थः ।

पंथानः मार्गाः शिवाः मङ्गलकराः सन्तु ।

सख्यौ—( शकुन्तलां विलोक्य ) हद्धी हद्धी । अन्तलिहिदा सउन्दला वणराईए । [ हा धिक् हा धिक् । अन्तर्हिता शकुन्तला वनराज्या । ]

काश्यपः—( सनिःश्वासम् ) [ अनसूये, गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छतं[१] मां ( [२]प्रस्थितः)

उभे—ताद, सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं[३] पविसामो । [तात, शकुन्तलाविरहितं शून्यमिव तपोवनं कथंप्रविशामः ।]

काश्यपः—स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य ) हन्त भोः, शकुन्तलां पतिकुलं[४] विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः ।

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २१ ॥

( इति निष्क्रान्ताः सर्वे । )

चतुर्थोऽङ्कः ।

---

१—अनुगच्छ । २—( प्रस्थितः ) प्रस्थितम् । ३—क्वचिन्नास्ति । ४—क्वचिन्नास्ति ।

Friends—(looking towards Shakuntala.) Alas! Alas! Shakuntala is hidden by the trees of the forest.

Kanva—(with a sigh). Anasuya, your sister has gone. Restrain your grief and follow me back to the hermitage. (Starts.)

Both—Father, How can we enter the hermitage which is, as it were, desolate without Shakuntala?

Kanva—Your affection for her makes you think like this.

(Walking thoughtfully.)

Now that I have sent Shakuntala to her husband's house, I am, free from anxiety; because a girl is certainly another's property and having sent her today to her husband, my conscience has become free from anxiety as if I have restored a deposit.

(Exeunt.)

दोनों सखियां—( शकुन्तला की ओर देखकर ) हाय हाय!! वन के वृक्षों ने शकुन्तला को छिपा लिया।

कराव—( श्वास लेकर ) हे अनसूया, तुम्हारी सहेली गई। अब तुम शोक छोड़ कर मेरे पीछे पीछे चली आओ। ( चलते हैं )

दोनों सखियां—हे पिता, शकुन्तला बिना तो तपोवन सूना सा लगता है। इसमें कैसे चलें?

कराव— ठीक है; प्रीति में ऐसाही दीखता है।

( विचार करते करते इधर उधर जाते हैं )

शकुन्तला को सुसराल भेजकर अब मैं निश्चिन्त हुआ क्योंकि बेटी पराया धन होती है। आज उसे पति के घर भेजकर मेरा अन्तःकरण ऐसा निश्चिन्त होगया है जैसे किसी की धरोहर फेर दी हो।

(सब बाहर जाते हैं)



हेति। शकुन्तला वनपंक्तिना दृष्टिपथात् अपनीता।

सहधर्मं चरति या सा। शोकं मद्वियोगपीडां

तातेति। शकुन्तलया हीनं निर्जनं इव तपोवनं कथं प्रविशावः ?

स्नेहेति। स्नेहस्य प्रवृत्तिः प्रसरः एवं दर्शयति या तथाविधा। विमर्शेन चिन्तया सह सविमर्शं।

हन्तेति। शकुन्तलां पतिगृहं प्रस्थाप्य मया निश्चिन्तता स्वतंत्रता च लब्धा। कुतः।

अर्थ इति। Prose Order :—हि कन्या परकीय एव अर्थः; अयं मम अन्तरात्मा अद्यं तां परिग्रहीतुः संप्रेष्य प्रत्यर्पितन्यास इव प्रकामं विशदो जातः।

Paraphrase:—यतः दुहिता अन्यस्य एव धनं; अयं मम अन्तरात्मा अन्तःकरणं अद्य तां पत्युःसकाशं प्रस्थाप्य प्रत्यर्पितः प्रतिदत्तः न्यासः निक्षेपः येन तथाविधः इव अत्यर्थं निर्मलः निश्चिन्तश्चजातः।

शकुन्तला विरहितं *Cf*:
विना मे मृगशावाक्ष्या तमोभूत मिदं जगत्—Bhartri.
शून्यंमन्ये जगदविरतज्वालमन्तर्ज्वलामि—Uttara.

---

Printed by RAMZAN ALI SHAH at the National Press, Allahabad.